# अथदानचंद्रिकायाअनुक्रमणिका ।



इतिदानचंद्रिकानुक्रमणिकासमाप्ता.

श्रीगणेशायनमः ॥ श्रीरमावेंकटेशाभ्यांनमः ॥ प्रणम्यमातरंगंगांभैरवंवनशंकरीम् ॥ महादे
वाख्यपितरंश्रौतस्मार्तविशारदम् ॥ १ ॥ दिवाकरेणसुधियासारमुद्धृत्यशास्त्रतः ॥ शिष्टानां
तन्यतेतुष्टयैदानसंक्षेपचंद्रिका ॥ २ ॥ तत्रपरस्वत्वोत्पत्त्यंतोद्रव्यत्यागोदानम् ॥ देवलः ॥
अर्थानामुदितेपात्रेश्रद्धयाप्रतिपादनम् ॥ दानमित्यभिनिर्दिष्टंव्याख्यानंतस्यकथ्यते ॥ तच्च
दानंत्रिधोक्तं गीतासु ॥ दातव्यमितियद्दानंदीयतेऽनुपकारिणे ॥ देशेकालेचपात्रेचतद्दानंसा
त्विकंस्मृतम् ॥ यत्तुप्रत्युपकारार्थंफलमुद्दिश्यवापुनः ॥ दीयतेचपरिक्लिष्टंतद्राजसमुदाहृत
म् ॥ अदेशकालेयद्दानमपात्रेभ्यश्चदीयते ॥ असत्कृतमवज्ञातंतत्तामसमुदाहृतम् ॥ ॥
गारुडे ॥ अर्हतेयत्सुवर्णादिदानंतत्कायिकंस्मृतम् ॥ तुलादानादि ॥ आर्तानामभयंदद्मी
त्येतद्धिवाचिकंस्मृतम् ॥ विद्यामादाययज्जप्यैतद्दानंमानसंद्विजाः ॥ इति ॥ ॥ अथपात
म् ॥ ॥ याज्ञवल्क्यः ॥ नविद्ययाकेवलयातपसावापिपात्रता ॥ यत्रदानमिमेचोभेतद्धिपा
त्रंप्रचक्षते इति ॥ भविष्ये ॥ किंचिद्वेदमयंपात्रंकिंचित्पात्रंतपोमयम् ॥ पात्राणामुत्तमं
पात्रंशूद्रान्नंयस्यनोदरे इति ॥ व्यासः ॥ प्रथमंतुगुरोर्दानंदत्वाश्रेष्ठमनुक्रमात् ॥ ततोऽन्ये
पांचविप्राणांदद्यात्पात्रानुसारतः ॥ इति ॥ भविष्यपुराणे ॥ सन्निधानस्थितान्विप्रान्दौहित्रंवि

द्रूपतिंतथा ॥ भागिनेयंविशेषेणतथाबंधून्गृहागतान् ॥ नातिक्रमेन्नरस्त्वेतान्सुमूर्खानपिगोप
पते ॥ अतिक्रम्यमहारौद्रंरौरवंनरकंव्रजेत् ॥ दक्षः ॥ सममब्राह्मणेदानंद्विगुणंब्राह्मणब्रुवे ॥ सं
हस्रगुणमाचार्येत्वनंतंवेदपारगे ॥ अब्राह्मणलक्षणमाह व्यासः ॥ ब्रह्मबीजसमुत्पन्नोमंत्रसंस्का
रवर्जितः ॥ जातिमात्रोपजीवीचभवेदब्राह्मणःसतु ॥ ब्राह्मणब्रुवलक्षणमाहतत्रैव ॥ गर्भाधाना
दिभिर्युक्तस्तथोपनयनेनच ॥ ॥ नकर्मविन्नचाधीतः सभवेद्ब्राह्मणब्रुवः ॥ ॥ अथद्रव्यवि
भागः ॥ ॥ शिवधर्मे ॥ तस्मात्त्रिभागंवित्तस्यजीवनायप्रकल्पयेत् ॥ भागद्वयंतुधर्मार्थमनि
त्यंजीवितंयतः ॥ वित्तस्यभागपंचकंकृत्वा भागद्वयंजीवनार्थंभागत्रयंदानार्थमितिहेमाद्रिः ॥
अथाग्राह्यदानानि ॥ ॥ स्कांदे ॥ अजिनंमृतशय्यांचमेषींचोभयतोमुखीम् ॥ कुरुक्षेत्रेचगृ
ह्णानोनभूयः पुरुषोभवेत् ॥ मनुः ॥ हिरण्यंभूमिमश्वंगामन्नंवासस्तिलान्घृतम् ॥ अविद्वान्प्र
तिगृह्णानोभस्मीभवतिकाष्ठवत् ॥ अविद्वान्नामविद्यातपोभ्यांहीनःतेननग्राह्यमिति ॥ ॥ अ
थदानकालः ॥ ॥ वाराहे ॥ दर्शेशतगुणंदानंतदशघ्नंदिनक्षये ॥ शतघ्नंतच्चसंक्रांतौशतघ्नं
विषुवेततः ॥ युगादौतच्छतगुणमयनेतच्छताहतम् ॥ सोमग्रहेतच्छतघ्नंतच्छतघ्नंरवेर्ग्रहे ॥
तच्छतघ्नंव्यतीपातेदानंवेदविदोविदुः ॥ विष्णुधर्मोत्तरे ॥ वैशाखीकार्त्तिकीमाघीपूर्णिमातुम

हाफला ॥ पौर्णमासीषुसर्वासुमासर्क्षसहितासुच ॥ दत्तानामिहदानानांफलंशतगुणंभवेत् ॥
इति ॥ ॥ अथपुण्यदेशः ॥ ॥ मनुः ॥ दृषद्वतीसरस्वत्योर्देवनद्योर्यदंतरम् ॥ तंदेवनिर्मि
तंदेशंब्रह्मावर्तप्रचक्षते ॥ नारदः ॥ पुण्यदेशेषुसर्वेषुगृहेदेवालयादिषु ॥ यत्रसाधनसंपत्तिस्त
त्रदानंसमाचरेत् ॥ भविष्यपुराणे ॥ वाराणसीकुरुक्षेत्रंप्रयागंपुष्करंतथा ॥ गोकर्णंनैमिषार
ण्यंसेतुंश्रीपर्वतंतथा ॥ महाकालंतथागंगामेतान्पुण्यतमान्विदुः ॥ पाद्मे ॥ लिंगंवाप्रतिमावा
पिदृश्यतेयत्रकुत्रचित् ॥ तत्सर्वंपुण्यतांयातिदानेषुचमहाफलं ॥ इति ॥ एषुदानमतिप्रशस्त
मितिहेमाद्रिः ॥ ॥ अथतीर्थेप्रतिग्रहनिषेधः ॥ ॥ पाद्मे ॥ नतीर्थेप्रतिगृह्णीयात्प्राणैःकंठ
गतैरपि ॥ इति ॥ तीर्थंतीरेक्षेत्रेच ॥ गंगाकृष्णागोदावरीणांतीरमाह विष्णुः ॥ गंगा
गोदारीकृष्णातीरमाहुर्महर्षयः ॥ उत्तरेनवगव्यूतिर्दक्षिणेयोजनत्रयम् ॥ इति ॥ भविष्ये
॥ तीराद्गव्यूतिमात्रंतुपरितःक्षेत्रमुच्यते ॥ इति ॥ गंगायांतुतीरेऽपिनग्राह्यमित्यर्थः
॥ ब्राह्मे ॥ प्रवाहमवधिंकृत्वायावद्धस्तचतुष्टयम् ॥ तत्रनप्रतिगृह्णीयात्प्राणैःकंठगतै
रपि ॥ इति ॥ प्रवाहोगर्भः ॥ दानधर्मे ॥ भाद्रशुक्लचतुर्दश्यांयावदाक्रमतेजलं ॥ ता
वद्गर्भंविजानीयात्तदूर्ध्वंतीरमुच्यते ॥ इति ॥ गर्भेप्रतिग्रहनिषेधः प्रसिद्धनदीषु गंडक्या

दिषुतुतीरेऽपिनिषेधः ॥ तदुक्तंदानधर्मे ॥ गंडक्यादिषुतीरेऽपिनग्राह्यंभूतिमिच्छता ॥ इति ॥ अत्यंतापादितीर्थेऽपिग्राह्यं ॥ अथचेत्प्रतिगृह्णीयाद्ब्राह्मणोवृत्तिकार्शितः ॥ दशांशमर्जितंदद्या देवंधर्मोनहीयते ॥ इतिपाद्मात् ॥ ॥ अथदानकृत्यं ॥ ॥ वाराहे ॥ सुस्नातःसम्यगाचांतः कृतसंध्यादिकक्रियः ॥ कामक्रोधविहीनश्चपाखंडस्पर्शवर्जितः ॥ दद्यादितिशेषः ॥ कात्यायनः ॥ कुशोपरिनिविष्टेनतथायज्ञोपवीतिना ॥ देयंप्रतिग्रहीतव्यमन्यथाविफलंभवेत् ॥ इति ॥गौतमः ॥ अंतर्जानुकरं कृत्वासकुशंसतिलोदकं ॥ फलान्यपिचसंधायप्रदद्याच्छ्रद्धयान्वितः ॥ नामगोत्रे समुच्चार्य प्राङ्मुखोदेयकीर्त्तनात् ॥उदङ्मुखायविप्रायदत्वातंस्वस्तिकीर्त्तयेत् ॥ सदेवताकदेयकीर्त्तनानंतरंदत्त्वेत्यर्थः ॥ ॥ अथप्रतिग्रहीतृकृत्यं ॥ ॥ तत्रैव ॥ॐकारमुच्चरन्प्राज्ञोद्रविणंसकुशोदकं ॥ गृह्णीयाद्दक्षिणेहस्ते तदंतेस्वस्तिकीर्तयेत् ॥ प्रतिग्रहीतासावित्रंसर्वत्रैवानुकीर्त्तयेत् ॥ सावित्रंदेवस्यत्वेति॥ततस्तुकीर्तये त्सार्धंद्रव्यंचद्रव्यदेवतां समापयेत्ततःपश्चात्कामस्तुत्याप्रतिग्रहं ॥यथाशाखं ॥ कइदंकस्माअदादितिमंत्रंपठित्वेत्यर्थः ॥आदित्यपुराणे॥प्रतिग्रहंपठेदुच्चैःप्रतिगृह्यद्विजोत्तमात् ॥मंत्रंपठेत्तुराजन्यादुपांशुचतथाविशि ॥ मनसाचतथाशूद्रेस्वस्ति वाचनमेवच ॥ ओंकारंब्राह्मणेकुर्यान्निरोंकारंमहीपतौ ॥ उपां

शुचतथावैश्येमनसाशूद्रजेतथा ॥ इति ॥ कौमात् ॥ पुनस्तत्रैव ॥ प्रतिग्रहस्यधर्मेचनजा
नातिद्विजोविधिं ॥ द्रव्यस्तैन्यसमायुक्तोनरकंप्रतिपद्यते ॥ इति ॥ तथा ॥ विधिंतुधर्मंविज्ञा
यब्राह्मणस्तुप्रतिग्रहे ॥ दात्रासहतरत्येवमहादुर्गाण्यसौध्रुवं ॥ इति यज्ञवल्क्योक्तेश्च ॥ ॥
अथद्रव्यमानं ॥ ॥ याज्ञवल्क्यः ॥ ॥ जालसूर्यमरीचिस्थंत्रसरेणुस्ततःस्मृतम् ॥ तेऽ
ष्टौलिक्षातुतास्तिस्रोराजसर्षपउच्यते ॥ गौरस्तुतेत्रयः षट्तेयवोमध्यश्चतेत्रयः ॥ कृष्णलः
पंचतेमाषास्तेसुवर्णस्तुषोडश ॥ पलंसुवर्णाश्चत्वारः पंचवापरिकीर्तितम् ॥ इति ॥ द्वेकृष्ण
लेरूप्यमाषोधरणंषोडशैवते ॥ शतमानंतुदशभिर्धरणैः पलमेवतत् ॥ निष्कः सुवर्णाश्चत्वा
रः ॥ इति हेमाद्रिः ॥ अथधान्यमानं ॥ ॥ भविष्ये ॥ पलद्वयंतुप्रसृतिः कुडवोद्विगुणंमतम्॥
चतुर्भिः कुडवैःप्रस्थःप्रस्थाश्चत्वार आढकः॥आढकैस्तैश्चतुर्भिश्चद्रोणस्तुकथितोबुधैः॥ द्रोणैः
षोडशभिः खारी विंशत्याकुंभउच्यते ॥ कुंभैस्तैर्दशभिर्वाहोधान्यमानंप्रकीर्तितम् ॥
॥ इति ॥ ॥ अथदानेदक्षिणापरिमाणमाह व्यासः ॥ सुवर्णंपरमंदानंसुवर्णंदक्षिणापरा ॥
सर्वेषामेवदानानांसुवर्णंदक्षिणेष्यते ॥ अदक्षिणंतुयद्दानंतत्सर्वंनिष्फलंभवेत् ॥ इति ॥ परे
त्युक्तेः ॥ पुरुषाहारौपयिकतंडुलादिकमपिदक्षिणाइतिहेमाद्रिः ॥ तथा ॥ देयद्रव्यतृतीयांशं

दक्षिणांपरिकल्पयेत् ॥ अनुक्तदक्षिणेदानेदशांशंवापिशक्तितः ॥ भविष्ये ॥ ज्ञेयंनिष्कशतं पार्थदानेषुविधिरुत्तमः ॥ मध्यमस्तुतदर्धेनतदर्धेनाधमः स्मृतः ॥ मेष्यांचकालपुरुषेतथान्ये पुमहत्सुच ॥ एवंवृक्षेरथेऽजेचधेनोः कृष्णाजिनस्यच ॥ अशक्तस्यापिक्षतोऽयंपंचसौवर्णिको विधिः ॥ इति ॥ जपाभिषेकमुदाहृत्य लिंगपुराणे ॥ अष्टषष्टिपलोन्मानांदद्याद्वैदक्षिणांगुरोः॥ होतॄणांचैवसर्वेषांत्रिंशत्पलमुदाहृतं ॥ तदर्धंजापकानांचद्वारपालांस्तदर्धतः ॥ एतेनसर्वत्रगु रोरर्धमृत्विजांतदर्धंजापकानांतदर्धंद्वारपालानांइतिहेमाद्रौदक्षिणाविभागोऽवगंतव्यः ॥ अथद्र व्यदेवता ॥ ॥ विष्णुधर्मोत्तरे ॥ अभयंसर्वदैवत्यंभूमिर्वैविष्णुदेवता ॥ कन्यादासस्तथादा सीप्राजापत्याः प्रकीर्तिताः ॥ प्राजापत्योगजः प्रोक्तस्तुरगोयमदैवतः ॥ तथाचैकशफंसर्वंक थितंयमदैवतं॥ महिषश्चतथायाम्यउष्ट्रोवैनैर्ऋतोभवेत्॥रौद्रींधेनुंविनिर्दिष्टाछागमाग्नेयमादिशे त्॥ मेषंतुवारुणंविद्याद्वाराहंवैष्णवंतथा॥आरण्याः पशवः सर्वेकथितावायुदेवताः॥जलाशया निसर्वाणिवारिधीनांकमंडलुम् ॥ कुंभंचकरकंचैववारुणानिनिबोधत॥समुद्रजानिरत्नानिवारु णानिद्विजोत्तमाः ॥ आग्नेयंकनकंप्रोक्तंसर्वलोहानिचाप्यथ ॥ प्राजापत्यानिसस्यानिपक्वान्नम पिचद्विज ॥ संज्ञेयाःसर्वगंधाश्चगांधर्वावैविचक्षणैः ॥ विद्याब्राह्मीविनिर्दिष्टाविद्योपकरणा

त्रिच ॥ सारस्वतानिज्ञेयानिपुस्तकादीनिपंडितैः ॥ सर्वेषांशिल्पभांडानांविश्वकर्मातुदेवता॥
द्रुमाणामथपुष्पाणांशाकैर्हरितकैस्तथा ॥ फलानामथसर्वेषांतथाज्ञेयोवनस्पतिः॥ मत्स्यमांसे
विनिर्दिष्टेप्राजापत्येतथैवच ॥ छत्रंकृष्णाजिनंशय्यांरथमासनमेवच ॥ उपानहौतथापात्रंयच्चा
न्यत्प्राणवर्जितम् ॥ सर्वंचांगिरसत्वेनप्रतिगृह्णीतमानवः ॥ शूरोपयोगियत्सर्वंशस्त्रचर्मध्वजादि
कं ॥ नृपोपकरणंसर्वंविज्ञेयंसर्वदैवतम् ॥ गृहंतुशुक्रदैवत्यंयदनुक्तंद्विजोत्तमाः ॥ विज्ञेयंविष्णु
दैवत्यंसर्वदाद्विजसत्तमाः ॥ इति ॥ अथप्रतिग्रहस्थानानि ॥ गृह्यपरिशिष्टे ॥ प्रतिगृह्णीतगां
पुच्छेकर्णेवाहस्तिनंकरे ॥ मूर्ध्निदासीमजंचैवपृष्ठेऽश्वतरगर्दभौ ॥ अश्वंकर्णेसटायांवाअन्नमु
द्दिश्यधारयेत्॥शय्यासनंगृहंक्षेत्रंसंस्पृश्यादायकांचनं ॥ उष्ट्रंचककुदिस्पृष्ट्वामृगांश्चमहिषादि
कान् ॥ गोधामश्वविधानेनपक्षेसंस्पृश्यपक्षिणः ॥ छत्रंदंडेतरून्मूलेफलंसंगृह्यगौरवात् ॥ प्र
गृह्योपानहौऽमत्रंवासयेत्प्रतिमुच्यवै ॥ अमत्रंपात्रं ॥ वासस्तथासमादायकन्यांशी
र्षेऽथवाकरे ॥ कन्यायादक्षिणांसमभिस्पृशेदित्यर्थः ॥ रतिभार्याऽपरपूर्वाप्रतिगृह्णीतचाक्ष
तां ॥ पुत्रमुत्संगमारोप्यप्रतिगृह्णीतदत्तकम् ॥ रथंरथमुखंस्पृष्ट्वाप्रतिगृह्णीतकूबरे ॥ कूबरो

१ इदंवासयेत्प्रतिमुच्यवैइत्येतदन्वयि प्रतिमुच्यनीरिकीकृत्य वासयेत्परिधापयेत् ।

युगाधारकाष्ठम् ॥ तथाहेमाद्रौदानखंडे ॥ भूमेःप्रतिग्रहंकुर्याद्भूमिंकृत्वाप्रदक्षिणम् ॥
करेगृहीत्वाकन्यांतुदासदास्यौद्विजोत्तमः ॥ आरुह्यचगजस्योक्तःकर्णेचाश्वस्यकीर्तितः ॥
तथाचैकशफानांतुसर्वेषांचविशेषतः ॥ प्रतिगृह्णीताजांशृंगेपुच्छेकृष्णाजिनंतथा ॥ येचै
कशफाःशृंगिणस्तान्विशेषतःशृंगेष्वहिगृह्णीयादित्यर्थः ॥ कर्णेचपशवःसर्वेग्राह्याःपुच्छेवि
चक्षणैः ॥ गृह्णीयान्माहिषंशृंगेखरंवैपृष्ठदेशतः ॥ प्रतिग्रहमथोष्ट्रस्ययानानांचाधिरोहणा
त् ॥ बीजानांमुष्टिमादायरत्नान्यादायसर्वतः ॥ वस्त्रंदशांतादादद्यात्परिधायापिवा
पुनः॥आरुह्योपानहौमंचमारुह्यैवचपादुके॥धर्मध्वजौतुसंस्पृश्यगृह्णीयात् ॥ अवतीर्यचसर्वाणि
जलस्थानानिवैद्विजः॥ आयुधानिसमादायतथामुच्यविभूषणम्॥आमुच्यबध्वेत्यर्थः ॥ इतिप्र
तिग्रहस्थानानि ॥ ॥ अथादौतुलापुरुषदानम् ॥ ॥ हेमाद्रौमात्स्ये ॥ अनेनविधिनाय
स्तुतुलापुरुषमाचरेत् ॥ प्रतिलोकाधिपस्थानेप्रतिमन्वंतरंवसेत् ॥ विमानेनार्कवर्णेनकिंकि
णीजालमालिना ॥ पूज्यमानोऽप्सरोभिश्चततोविष्णुपुरंव्रजेत् ॥कल्पकोटिशतंयावत्तस्मिँल्लो
केमहीयते ॥ कर्मक्षयादिहपुनर्भुविराजराजोभूपालमौलिमणिरंजितपादपीठः ॥ श्रद्धान्वितो
भवतियज्ञसहस्रयाजीदीप्तप्रतापजितसर्वमहीपलोकः ॥ योदीयमानमपिपश्यतिभूतियुक्तःका

ळांतरेस्मरतिवाचयतीहलोके ॥ योवाशृणोतिपठतींद्रसमानरूपः प्राप्नोतिधामसपुरंदरदेवजु
ष्टम् ॥ इति ॥ तत्रैववह्निपुराणे ॥ एवंदत्वासुवर्णंतुब्रह्महत्यादिकंचयत् ॥ पापंनिहत्यपुरुषः
सर्वंलोकंसगच्छति ॥ तत्रस्थित्वाचिरंराजन्यदायातिमहीतले ॥ राजराजेश्वरः श्रीमा
न्वीतशोकोनिरामयः ॥ रूपसौभाग्यसंपन्नोनित्यंविष्णुपरायणः ॥ पुनर्विष्णुपदंयातिय
त्रगत्वानशोचति ॥ इतिसुवर्णादितुलापुरुषदानफलम् ॥ ॥ अथकुंडमंडपादि ॥ ॥ तच्च
सुवर्णतुलायामेवावश्यकमितिहेमाद्र्यादयः ॥ रत्नरजततुलायांतुकृताकृतमित्युक्तंतत्रैव ॥
होमाद्यशक्तौतुमंडपादिरहितमेवकुर्यात् ॥ नतत्रमंत्रोहोमोवाएवमेवप्रदीयते ॥ इतिमात्स्यो
क्तेः ॥ अहमंत्राद्वारजापमंत्राश्चनेत्यर्थः ॥ अथतुलावेदीपरिमाणंचाह ॥ तत्रैव ॥ तत्रादौशुभेऽ
ह्निशोभार्थंकुंडमंडपमात्रंवाकृत्वासप्तहस्तांवापंचहस्तांवातृतीयांशेनचतुर्थांशेनवोच्चांवेदिंकृ
त्वातदुपरिपूर्वपश्चिमयोःस्तंभद्वयंनिखेयम् ॥ हेमाद्रौमात्स्ये ॥ शाकेंगुदीचंदनदेवदारुश्रीप
र्णीविल्वप्रियकांजनोत्थम् ॥ स्तंभद्वयंहस्तयुगावखातंकृत्वादृढंपंचकरोच्छ्रितंतत् ॥ तदंत
रंहस्तचतुष्टयंस्यादथोत्तरांगंचतुरस्रमेव ॥ इति ॥ शाकोवृक्षविशेषोमहासारइतिप्रसिद्धः ॥
श्रीपर्णीभद्रतरुः ॥ प्रियकाजीवकः ॥ सारमतेकदंबः ॥ अंजनःकांचनतुल्यपर्णो

वृक्षविशेषः ॥ स्तंभद्वयंचचतुरस्रीकृत्यवेदिमध्यपूर्वपश्चिमभागयोर्निखेयं उत्तरांगंस्तंभयो रुपरितिर्यक्काष्ठंतच्चपंचकरयोः स्तंभयोर्हस्तचतुष्टयोपरिनिधेयंचतुरस्रम् ॥ अथोत्तरांगं चतदंगमेवेतिपाठेतदीयमितिस्तंभसजातीयकाष्ठमित्यर्थः ॥ समानजातिश्चतुलावलंब्याहेमे नमध्येपुरुषेणयुक्ता ॥ दैर्घ्येणसाहस्तचतुष्टयंस्यात्पृथुत्वमस्याश्चदशांगुलानि ॥ सुवर्ण पट्टाभरणाचकार्यासलोहपाशद्वयशृंखलाभिः ॥ युतासुवर्णेनचरत्नमालाविभूषितामाल्य विभूषणाढ्या ॥ समानजातिस्तोरणसमानजातिः ॥ तुलोत्तरांगमध्येद्वादशभिरंगुलैरधस्ता दुदगग्राअवलंब्या पुरुषेणविष्णुनाशृंखलाविलंबितयासुवर्णनिर्मितया तत्प्रतिमालक्षणद्वयं न्यस्तयोर्बहिःस्थितमंगुलषट्कंविहायविज्ञेयं समतुलायाः अष्टोत्तरशतांगुलमितत्वात् ॥ पृथुत्वंचास्यादशांगुलपरिमितेनवलयाकृतिसूत्रेणसंमितंविधेयमित्यर्थः सलोहपाशद्वयशृं खलाभिर्युक्ताकार्येत्यर्थः ॥ तत्रैव वह्निपुराणे ॥ आश्वत्थींखादिरींचापिपालाशींवासुवृक्ष जाम् ॥ चतुर्हस्तप्रमाणेनसुश्लक्ष्णांसुदृढांनवाम् ॥ सुवर्तुलांसमांतद्वत्स्निग्धाछिद्रत्रयान्वि ताम् ॥ मौंजशिक्यद्वयोपेतांबद्धांस्तंभेतुयाज्ञियेइत्याहनारदः ॥ चतुरस्रातुलाकार्यापादौचा पितथाविधौ । चतुर्ष्वपिचपार्श्वेषुमानंस्याच्चतुरंगुलम् ॥ मुक्त्वातावत्तुकरकावंतयोर्विन्य

सद्बुधः॥ चतुर्हस्ताघटतुलामध्यशृंखलयान्विता ॥ शिक्यंहस्तत्रयंकुर्यात्कुटकंचतुरंगुलम् ॥
इति ॥ यदाहतत्रैव विश्वकर्मा ॥ विशेषदानंकथितंतुलादितस्मात्तुलालक्षणमुच्यतेप्राक् ॥
तुलाप्रमाणंस्मृतमंगुलानिदैर्घ्येंगुलैः षण्णवतिप्रमाणैः ॥ प्रांतद्वयेप्यंगुलषट्कषट्केशतां
गुलाष्टोत्तरमंगुलानाम् ॥ स्युर्विंशतिः पंचचधातुबंधाबंधेष्वधिष्ठानसुरानिवेश्याः ॥ ईशः
शशीमारुतरुद्रसूर्याः स्याद्विश्वकर्मागुरुरंगिराग्नी॥ प्रजापतिर्विश्वजगद्विधातापर्जन्यशंभूपितृ
देवताच ॥ सौम्यश्चधर्मामरराजमश्विनौजलेशमित्रावरुणौमरुद्गणाः ॥ धनेशगंधर्वजलेशवि
ष्णुर्दंडेचतुर्विंशतिरेवदेवताः । अत्रसौम्योबुधः ॥ स्यात्पंचविंशः पुरुषः सएकोयस्तोल्यमा
नस्तुलयामहात्मा ॥ एताविधेयास्तपनीयमय्योरत्नार्चितादैवतमूर्तयस्ताः ॥ षडंगुलः
स्याच्चतुरस्रपिंडः प्रांतद्वयेविष्णुरनंतनामा ॥ पार्श्वद्वयंतच्चतुरंगुलंस्यादेवंमयातेकथितं
प्रमाणम् ॥ मध्यांकुटेसंकुलिकांगुलानिपंचाधिकाविंशतिरेवदैर्घ्ये ॥ एकांगुलःस्या
द्ववतीहपिंडस्तत्राधिदेवःकिलवासुकिःस्यात् ॥ एकैकरज्जुर्लभतेंगुलानित्रिःसप्ततिःपिंडगतां
गुलाच ॥ तच्चैलकद्वंद्वमथांगुलानित्रिंशत्तथापंचदशाधिकास्यात् ॥ तद्धातुबद्धंशुभकाष्ठपी
ठंपिंडेतथाद्वंद्वमथोविधेयम् ॥ अधोघटोभूम्यधिदेवतास्यात्तुलांतरेभूमिपतिर्निवेश्यः॥ इ

तिहेमाद्रौमात्स्योक्तेः वेद्यादितुलाकृत्यंलक्षणंच ॥ अथवेद्यांषोडशारचक्रलिखनप्रकारउक्तो मदनरत्ने ॥ तत्राचार्योवेद्यांमध्येत्रिहस्तव्यासचतुरस्रंप्रसाध्यप्रागपरदक्षिणोत्तरनवरेखाभि स्तच्चतुःषष्टिकोष्ठकंकुर्यात् ॥ तत्रकोष्ठानिप्रत्येकंनवनवांगुलानिसंपद्यंते ॥ ततोबाहिरंत्य पंक्तिषुचतुर्दिक्षुमध्यकोष्ठानिचत्वारिचत्वारिमार्जयित्वातदुपर्युपांत्यपंक्तिषुपार्श्वयोस्तत्रत्रयं त्रयंत्यक्त्वाप्रतिदिशंप्रतिमध्यकोष्ठद्वयंद्वयंमार्जयेत् ॥ तच्चतुर्दिक्षुषट्षट्कोष्ठानिचत्वारि द्वाराणिसिध्यंति ॥ ततोमध्यस्थितषोडशकोष्ठानिमार्जयेत् ॥ ततोबाह्यएकैकंकोण कोष्ठंविहाय ॥ कोणकोष्ठद्वारपीठांतरालवर्तीन्यवशिष्टानिपंचपंचकोष्ठानिमार्जयेत् ॥ तथाच मध्यचतुरस्रपीठपादाः सिध्यंति ॥ ततोमध्याच्चत्वारिवृत्तानिकुर्यात् ॥ तत्राद्येचत्वार्यंगुला निव्यासः द्वितीयेऽष्टौ तृतीयेचतुर्विंशतिः चतुर्थेषड्विंशतिरिति ॥ तच्चतुरंगुलंवृत्तंकर्णिकारूपं पीतेनरजसापूरयित्वा कर्णिकावधिरेखांसितेनरजसानिर्माय तद्बहिरष्टांगुलात्मकेवृत्तेपीतरक्ता सितरजोभिः संपादितमूलमध्याग्राणिषोडशकेसराणिसंपाद्य तत्केसरावधिरेखांसितेनैवरजसां गुलोन्नतांसंपाद्य चतुर्विंशांगुलात्मकेतद्बहिर्वृत्तेसितेनरजसाष्टदिक्ष्वष्टौपत्राणिरक्ताग्राणिकुर्या त् ॥ ततोदलांतररेखांसितेनरजसाविधाय दलांतराणिकृष्णेनरजसापूरयित्वातद्बहिरेकांगु

लांतरांबहिर्वृत्तरेखांसितेनैवरजसासंपाद्य वृत्तद्वयांतरंपरितोष्टदलाग्रतन्मध्यचिह्नैःषोडशधा विभज्य प्रतिभागंयवाकारान्षोडशारानश्यामपीतारुणश्वेतरजोभिः कल्पयित्वा तदंतरेण यथायोगंरजोभिःपूरयित्वा तद्बहिःसितपीतारुणश्यामहरिताःपंचरेखालिखेत् ॥ तद्बहिः पीठक्षेत्रंचतुरस्रंयथाशोभंरजोभिःरक्तंकृत्यपीठावधिरेखांसितेनरजसाचतुरस्रांरचयेत् ॥ द्वारक्षेत्राणिपूर्वादितःपीतश्यामसितहरितरजोभिःपूरयेत् ॥ आग्नेयादिकोणकोष्ठचतुष्टयंलोहितहरितश्यामधवलैःपूरयेत् ॥ आग्नेयादिपीठपादचतुष्टयंपंचकोष्ठात्मकंतुक्रमात्सितरक्तपीतकृष्णरजोभिः पूरयेत् ॥ ततःसितेनरजसांगुलोन्नतेनबहिश्चतुरस्रेरेखांकुर्यादितिमदनरत्नादयः ॥ ठक्कुरमतेतु चतुरस्रंचतुर्हस्तंतत्रप्रत्येकंद्वादशांगुलानिनवकोष्ठानि वृत्तानितुपंच तत्राद्यवृत्तेचत्वार्यंगुलानिव्यासः द्वितीयेऽष्टौ तृतीयेविंशतिः चतुर्थेचतुर्विंशतिः पंचमेतच्चतुरस्रंबहिस्ततोष्टत्रिंशत्इतिपंचकोष्ठात्मकंपीठपादचतुष्टयम् आग्नेयादिक्रमेणरक्तहरितश्यामसितैः पूरणीयं कोणकोष्ठचतुष्टयम् ॥ प्रत्येकंत्रिभिस्त्रिभिर्वर्णैरितिविशेषः ॥ इदमेववारुणंमंडलंजलाशयोत्सर्गादौज्ञेयम् ॥ पुनस्तत्रैव ॥ वज्रंप्रागुत्तमेभागे आग्नेय्यांशक्तिमुज्ज्वलाम् ॥ आलिखेद्दक्षिणेदंडंनैर्ऋत्यांखड्गमालिखेत् ॥ पाशं

तुवारुणेलेख्यंध्वजंवैवायुगोचरे ॥ कौबेर्यांतुगदांलिख्यईशान्यांशूलमालिखेत् ॥ शूल
स्यवामदेशेतुचक्रंपद्मंचदक्षिणे ॥ ततोमहावेद्युपरिपंचवर्णफलपुष्पोपशोभितंवितानंकुंडमंड
पेवध्नीयादिति ॥ इतिवेद्युपरिषोडशारचक्रम् ॥ ॥ अथघृतादितुलाफलमुक्तंहेमाद्रौविष्णु
धर्मोत्तरे ॥ प्रथमातुघृतस्योक्तातेजोवृद्धिकरीशुभा ॥ माक्षिकेणतुसौभाग्यंतैलेनवहुलाःप्रजाः ॥
वस्त्रेणदिव्यवस्त्राणिप्राप्नोतितुलयाध्रुवं ॥ लवणेनतुलावण्यमरोगित्वंगुडेनच ॥ असपत्नः
शर्करयासुरूपंचंदनेनतु ॥ आवियोगोभवेद्भर्त्रातुलयाकुंकुमस्यच ॥ नसंतापोहृदिभवेत्क्षीर
स्यतुलयातथा ॥ सर्वकामप्रदाःसर्वाःसर्वपापक्षयंकराः ॥ यःकरोतितुलाःसर्वाःसगौर्यालयमा
प्नुयात् ॥ मंत्रेणदद्यादभिमंत्रितांतुसकृत्तुलामेकतमांद्विजेभ्यः ॥ सयातिगौर्याःसदनंसुपुण्यंनशो
कदौर्भाग्यमुपाश्नुतेपुमान् ॥ अथतुलाप्रार्थनामंत्रः ॥ त्वंतुलेसर्वभूतानांप्रमाणमिहकीर्तिता ॥
मांतोलयंतीसंसारादुद्धरस्वनमोस्तुते ॥ इत्यारुह्य ॥ गोदोहकालंतत्रैवचिंतयित्वाहरि
प्रियाम् ॥ अवरुह्यततोदद्यादर्घपादमथापिवा ॥ गुरुंसंपूज्यविधिवद्वस्त्रालंकारभूषणैः ॥ विसर्ज
येन्नमस्कृत्यभोजयेद्द्विजपुंगवान् ॥ शेषंद्विजेभ्योदातव्यंस्त्रीभ्योन्येभ्यस्तथैवच ॥ कदली
दलसंस्थाचपंचापिंडाहिमाद्रिजा ॥ कर्पूरस्यतुतांपूज्यकुंकुमेनालभेत्तुताम् ॥ विधिनानेनयोद

द्यातुलादानंविमत्सरः ॥ सलोकमेतिपार्वत्याःसेव्यमानोऽप्सरोगणैः ॥ तत्रापिकालेसुचिरमिह
लोकेनृपोभवेत् ॥ आत्मतुल्यंसुवर्णवारजतंरत्नमेववा ॥ योददातिद्विजाग्र्येभ्यस्तस्याप्येत
त्फलंभवेत् ॥ एतद्भूमिदानजन्यम् ॥ ब्रह्महत्यादिपापाद्यैर्मुक्तःशिवपुरंव्रजेत् ॥ सचतत्पाप
निर्मुक्तःप्रोक्तंविष्णुपुरंव्रजेत् ॥ तुलापुरुषभूमौचदीयमानेतुयेनराः ॥ पश्यंतितेपिवायांतिये
वास्युरनुमोदकाः ॥ गुडंवायदिवाखंडंलवणंवापितोलितम् ॥ योदद्यादात्मनातुल्यंनारीवापु
रुषोपिवा ॥ पुमान्प्रद्युम्नवत्स्याच्चनारीस्यात्पार्वतीसमा ॥ सुभगौरूपसंपन्नौभुंजीतांतौत्रिवि
ष्टपम् ॥ हिरण्यदक्षिणायुक्तंसवस्त्रंभूषणान्वितम् ॥ अलंकृत्वाद्विजाग्र्यंतंपरिधाप्यचवा
ससी ॥ खंडादितोलितंपश्चाद्गुरवेप्रतिपादयेत् ॥ सर्वकामसमृद्धात्मानंतंकालंवसेद्दिवि ॥
इतिघृतादितुलादानफलम् ॥ ॥ अथनानारोगनिरासार्थंद्रव्यविशेषतुलादानान्युक्तानि
गारुडे ॥ तुलापुरुषदानंतुशृणुमृत्युंजयोद्भवम् ॥ अथलोहंप्रदातव्यंसर्वरोगोपशांतये ॥ कांस्यं
चयक्ष्मणेदेयंत्रपुचार्शोविकारके ॥ अपस्मारेतुसीसंस्यात्ताम्रंकुष्ठेचदारुणे ॥ पित्तलंरक्तपित्ते
चरूप्यंप्रदरमेहयोः ॥ सुवर्णंसर्वरोगेषुप्रदद्यान्मृत्युनाशनम् ॥ फलोद्भवंतथादेयंग्रहिण्यांदीर्घ
वाहिनि ॥ गौडंभस्मकरोगेचपौगंस्याद्गंडमालके ॥ पौगंपूगीफलम् ॥ काष्ठजंचाग्निमांद्येस्या

द्रोगोत्पत्तौतुपैष्टकम् ॥ मधूद्भवंतथादेयंकासश्वासजलोदरे ॥ घृतोद्भवंतथादेयंछर्दिरोगोपशां
तये॥क्षीरंपित्तविनाशायदधिस्याद्भगदारणे॥लवणंवेपनाशायपैष्टंदद्रुविनाशने॥ धान्यंचसर्वरो
गस्यनाशनेमुनिभिः स्मृतम् ॥इति॥ अत्रायंसंक्षेपोदानोद्द्योतेऽपि॥रूप्यतुलायांसुवर्णतुला
फलमेवपितृतृप्तिप्रदरमेहनाशश्च रत्नतुलायांस्वर्णफलमेव ॥ ताम्रेणकुष्ठनाशः ॥
लोहेनसर्वरोगविनाशः ॥ घृतेनतेजोवृद्धिश्छर्दिनाशश्च ॥ गुडेनारोगित्वंसौभाग्यवृद्धिश्च ॥
लवणेनलावण्यंसौभाग्यंच ॥ मधुनासौभाग्यंकासश्वासजलोदरनाशश्च ॥ तैलेनप्रजावान्
भवति ॥ क्षीरेणपित्तनाशःसंतापनिवृत्तिश्च ॥ दध्नाभगंदरनाशः ॥ शर्करयासपत्नबाधा
निवृत्तिः ॥ अन्नेनारोगित्वम् ॥ पिष्टेनदद्रुनाशः ॥ फलैःसंग्रहणीनाशः ॥ क्रमुकैर्गंडमा
लानाशोमुखदुर्गंधिनाशनंदद्रुनाशश्च ॥ क्रमुकंपूगीफलम् ॥ चंदनेनसौंदर्यवान् ॥ गंधेनसौ
भाग्यम् ॥ वस्त्रेणदिव्यवस्त्रावाप्तिः ॥ काष्ठैरग्निमांद्यनाशः ॥ विष्णुप्रीतिर्वासर्वद्रव्यैर
पीति ॥ इतिनानारोगनिरासद्रव्यविशेषतुलाः ॥ ॥ अथपूजार्थंतत्तद्द्रव्याधिदेवतामाह॥
गारुडे॥ अधिदैवंतुलोहेवैमहाभैरवउच्यते॥कांस्येत्रपावशिवनौचवायुश्चसीसकेस्मृतः॥ताम्रेसू
र्यस्तथाप्रोक्तः पैत्तलेचकुहूस्तथा॥ रौप्येचपितरोज्ञेयाः सौवर्णेसर्वदेवताः ॥फलेसोमोगुडेचाप

स्तांबूलेचविनायकः ॥ गंधर्वाःकुसुमेचैवजांगलेऽग्निस्तथास्मृतः ॥ जांगलेकाष्ठे ॥ मधौय
क्षःप्रयत्नेनघृतेमृत्युंजयस्तथा॥क्षीरेतारागणाः सर्वेदध्निसर्पाः प्रकीर्तिताः ॥ लवणेपार्वतीदेवी
समुद्दिष्टाधिदेवता ॥ पिष्टेप्रजापतिर्देवोअन्नेसर्वाश्चदेवताः ॥ आर्तिर्यदास्यात्पात्राणांप्राप्नुयात्पु
ण्यदेशतः ॥ नित्यंमृत्युंजयप्रीतिर्विधिनायत्प्रदीयते ॥ तदेवसर्वशांत्यर्थंभवतीतिनसंशयः ॥
तुलापुरुषदानेनमृत्युंजयतिमानवः ॥ आगमोक्तमृत्युंजयमंत्रेणपूजयित्वेत्यर्थः ॥ नाममंत्रे
णवायथाधिकारंयोज्यम् ॥ इतिद्रव्याधिदेवताः ॥ ॥ अथकालविशेषः ॥ दानोद्द्योते विश्वा
मित्रः ॥ आदित्येराहुणाग्रस्तेसुवर्णैस्तोलयेत्तनुम् ॥ सोमग्रहेतुरौप्येणयद्वादानंतथा
शृणु ॥ प्रवर्ग्यस्यमुखेजातउत्पन्नःपितृदेहतः ॥ सर्वपापहरंवैतद्ददामिप्रीयतांविधुः ॥
इत्युच्चार्यजलंत्वप्सुनिक्षिपेद्द्विजसत्तमइति ॥ अथतुलापुरुषदानविधिः हेमाद्रौविष्णुधर्मो
त्तरे ॥ तुलादानंप्रवक्ष्यामिसर्वपापप्रणाशनम् ॥ यद्गौर्याचरितंपूर्वंलक्ष्मीनारायणेनतु ॥
पुण्यंदिनमथासाद्यतृतीयायांविशेषतः ॥ गोमयेनानुलिप्तायांभूमौकृत्वाघटंशुभम् ॥ दारवंशु
भवृक्षस्यचतुर्हस्तप्रमाणतः ॥ सुवर्णंतत्रबध्नीयात्स्वशक्त्याघटितंघटे ॥ सौवर्णंस्थापयेत्त
त्रवासुदेवंचतुर्भुजम् ॥ शिक्यद्वयंचबध्नीयात्स्थापयेत्पीठकेततः ॥ तत्रारोहेत्सवस्त्रास्त्रःसर्वा

लंकारभूपितः ॥ अभीष्टदेवतांगृह्यस्नापयित्वाघृतादिभिः ॥ तुलापुरुपदानस्यविधिरेपप्रकी
र्तितः ॥ अत्रविधिरेपप्रकीर्तितइतिएतावत्येवकर्तव्यतेत्युक्तंभवतीतिदामोदरः नान्यादिति ॥
तुलादानमधिकृत्यलिंगपुराणे ॥ दक्षिणांचशतंसार्द्धंतदर्धंवापिदापयेत् ॥ गुरोरितिशेपः ॥
ऋत्विजांचैवसर्वेषांदशनिष्कान्प्रदापयेत् ॥ इति । तथायजमानोऽयनग्रहणसंक्रमादिपुण्यका
लमासाद्यपूर्वेद्युरेकभक्ताचरितप्रायश्चित्तःकृतनित्यक्रियोदर्भेष्वासीनोदर्भान्धारयमाणः शुचि
राचम्य देशकालौसंकीर्त्य ममामुककामनासिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थं अमुकद्रव्यतुलापु
रुपदानंकरिष्ये ॥ इतिसंकल्प्य ॥ तथारोगनिरासार्थंतुममामुकरोगनिरासेनममास्यशिशोर्वा
मुकरोगनिरासेनक्षिप्रारोग्यसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थमिति॥तथा यदातुशिष्टाचारवशात्ता
म्रादितुलासुअष्टमांशंचतुर्थांशंवासुवर्णरजतादिप्रक्षिप्यते तदासुवर्णादितुलयाचतुर्थांशाष्टमां
शादितुलाविशेपफलप्राप्तिद्वारा इत्युल्लेखःकार्यः॥तदंगतयागणपतिपूजनंपुण्याहवाचनमाचार्य
वरणमंगदेवतापूजनमहंकरिष्ये इतिसंकल्प्य गणपतिंसंपूज्यपुण्याहंस्वस्तिऋद्धिः श्रीःकल्या
णमितिशब्दपंचात्मकंबोधायनोक्तंब्राह्मणांस्त्रिस्त्रिर्वाचयित्वा आचार्यंवृत्वा आचार्यं तुलायांगौ
रींविष्ण्वादितुलांगदेवताश्च पूजयित्वा रोगनिरासार्थंतु महामृत्युंजयमंत्रेणप्रतिमायांमृत्युंजयं

ताम्रादितोलनीयद्रव्यादिदेवताश्चपूजयेदिति॥इतितुलापुरुषदानविधिविशेषः॥अथतुलादान
प्रयोगः॥यजमानःशुचिराचम्य प्राणानायम्य देशकालौसंकीर्त्य एकैकमन्वंतरकालावच्छिन्नप्र
तिलोकपालस्थाननिवासपूर्वकार्कवर्णकिंकिणीजालमालिविमानाधिकरणकाप्सरःपूजासहित
शिवपुरगमनपूर्वककल्पकोटिशतावच्छिन्नविष्णुपुराधिकरणकनिवासकामः सुवर्णरत्नरौप्य
तुलापुरुषमहादानमहंकरिष्ये ॥ यद्वा ॥ ब्रह्महत्यादिसकलपापक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थं
सुवर्णरत्नरौप्यतुलापुरुषमहादानंकरिष्ये ॥ तत्रादौगणपतिपूजनंपुण्याहवाचनंमातृका
पूजनंनांदीश्राद्धाचार्यवरणादिकुर्यात् ॥ तातादितुलायांतु संकल्पोत्तरंगणपतिपूजनपूर्वं
कंपुण्याहवाचनमात्रंकृत्वा आचार्यंवृत्वा यथाविभवंवस्त्रालंकारादिभिः पूजयेत् ॥ ततआ
चार्योगोमयोपलिप्तवेद्यादौसर्षपविकिरणंपंचगव्यप्रोक्षणंकृत्वा वेद्यांवारुणमंडलंविलिख्य उ
परिकुंडमंडपेपंचवर्णवितानंफलपुष्पोपशोभितंध्वजंबध्वा वेद्यादौघटमाबध्य तत्रदक्षिणोदक्
शिक्यांतुलांबध्नीयात् ॥ गौरीप्रीत्यर्थंतुलायांकर्पूरकृतपंचपिंडिकारूपांगौरींकुंकुमेनानु
पूजयेत् ॥ ततोधर्मराजसूर्यविष्णुप्रतिमाः तिस्रोमाषमात्रसुवर्णनिर्मिताअग्न्युत्तारणा
दिपूर्वकंसंपूज्य इष्टदेवतांचपंचामृतेनाभिषिच्याभ्यर्च्यच विष्णुप्रतिमांतुलामध्येबध्वात



तः पूर्वोक्ततोलनीयद्रव्यादिदेवतांसंपूज्यतुलायैनमइतितुलांतुलाप्रांतकूटयोर्विष्णुमनंतं म
ध्यकूटेवासुकिं फलकद्वयेभूमिंचसंपूज्य रक्तवस्त्रेणतुलांसंवेष्ट्य ततः शक्तौसत्यांतुलादं
डेसुवर्णनिर्मितासुचतुर्विंशतिप्रतिमासुउदक्संस्थादेवतामावाहयेत्पूजयेच्च ॥ तदित्थं ॥
ॐ ईशानायनमः ईशानंआवाहयामि १ ॥ एवंसर्वत्र ॐ शशिनेनमः शशिनंआवाहया
मि २ ॐ मारुताय० ३ ॐ रुद्राय० ४ ॐ सूर्याय० ५ ॐ विश्वकर्मणेन० ६ ॐ
गुरवेन ० ७ ॐ अंगिरोग्निभ्यां ० ८ ॐ प्रजापतये० ९ ॐ विश्वेभ्योदेवेभ्योन० १० ॐ
धात्रेन० ११ ॐ पर्जन्यशंभुभ्यां० १२ ॐ पितृभ्योन० १३ ॐ सौम्याय० १४ ॐ धर्माय०
१५ ॐ अमरराजाय० १६ ॐ अश्विभ्यांन० १७ ॐ जलेशया० १८ ॐ मित्रावरुणाभ्यांन०
१९ ॐ मरुद्गणेभ्यो० २० ॐ धनेशाय० २१ ॐ गंधर्वाय० २२ ॐ जलेशाय० २३ ॐ विष्णवे०
२४ इत्यावाह्य संपूज्यच ततोयजमानोवस्त्राभरणगंधमाल्याद्यलंकृतःकुसुमांजलिंगृहीत्वा तु
लांत्रिः प्रदक्षिणीकृत्य प्राङ्मुखउपविश्य प्रार्थयेत् ॥ ॐ नमस्तेसर्वदेवानांशक्तिस्त्वंसत्यमा
श्रिता ॥ साक्षिभूताजगद्धात्रीनिर्मिताविश्वयोनिना ॥ एकतःसर्वसत्यानितथानृतशतानिच ॥
धर्माधर्मकृतांमध्येस्थापितासिजगद्धिते ॥ त्वंतुलेसर्वभूतानांप्रमाणमिहकीर्तिता ॥ मांतोल

यंतीसंसारादुद्धरस्वनमोस्तुते ॥ योसौतत्त्वाधिपोदेवः पुरुषः पंचविंशकः ॥ सएषोऽधिष्ठितो देवित्वयितस्मान्नमोनमः ॥ नमोनमस्तेगोविंदतुलापुरुषसंज्ञक ॥ त्वंहरेतारयस्वास्मानस्मा त्संसारसागरात् ॥ इतिपठित्वा तुलोपरिपुष्पांजलिंक्षिपेत् ॥ पुनस्तुलांत्रिःप्रदक्षिणीकृत्य वामहस्तेधर्मराजंदक्षिणेसूर्यंअंकेस्वाभीष्टदेवतांपंचामृताभिषिक्तार्चितांचादाय प्राङ्मुखस्तु लायामुत्तरफलकमारोहेत् ॥ दक्षिणेनसुवर्णःस्यादुत्तरेणनराधिपः ॥ इतिमात्स्यवचनात् ॥ नराधिपइत्युपलक्षणम् ॥ ततः आचार्योदक्षिणफलकेतोलनीयद्रव्यमारोपयेत् ॥ सुवर्णाद्या वत्समाधिकंस्यात् ॥ पुष्टिकामेनभूयिष्ठमधिकंकार्यम् ॥ ततोयजमानस्तुलामध्यदंडास्थित दृष्टिर्हरेर्मुखंपश्यन्मंत्रौपठेत् ॥ ॐ नमस्तेसर्वभूतानांसाक्षिभूतेसनातनि ॥ पितामहेनदेवित्वं निर्मितापरमेष्ठिना ॥ त्वयाधृतंजगत्सर्वंसहस्थावरजंगमम् ॥ सर्वभूतात्मभूतस्थेनमस्तेविश्व धारिणि ॥ इतिगोदोहकालंतत्रस्थित्वा ततस्तुलामवतीर्य तोलितद्रव्येतुलसीपत्रंनिधाय देश कालौसंकीर्त्य अमुककामइदममुकद्रव्यमात्मसमतोलितमाचार्याद्यन्येभ्योब्राह्मणेभ्यः सम स्ताश्रितबंधुवर्गेभ्योदीनानाथेभ्यश्चदातुमहमुत्सृजे नममेत्युत्सृज्य ततः कृतस्यामुकतुला पुरुषदानकर्मणःसांगतासिद्ध्यर्थमाचार्यायइदंसुवर्णंअग्निदैवतंदक्षिणात्वेनतुभ्यमहंसंप्रददे न

ममेतिदद्यात् ॥ पुनः कृतस्यामुकतुलापुरुपदानकर्मणःइत्यादि सांगतासिद्ध्यर्थंनानानाम गोत्रेभ्योब्राह्मणेभ्योयथाशक्तिभूयसींदक्षिणांदातुमहमुत्सृजे ॥ तथा कृतस्यामुकतुलापुरुष दानकर्मणः सांगतासिद्ध्यर्थंयथाशक्तिब्राह्मणान्यथाकालंयथोत्पन्नेनान्नेनभोजयिष्ये इति संकल्प्य ॥ तत आचार्यावाहितदेवताःसर्वाःअर्चनपूर्वकंविसृज्य आचार्यायतुलार्धं पादं वा प्रतिमावस्त्राभरणादिसर्वंतुभ्यमहंसंप्रददे नममइतिदत्वा सदस्यायादावेतदर्धंदत्वा शेपंचसद्यएवयथोद्देशंदत्वा प्रमादात्कुर्वतांकर्म० यस्यस्मृत्येतिजापित्वा कर्मेश्वरार्पणंकृत्वासुहृद्युतोभुंजीतेति ॥ केचित्तुअत्रतुलापूजोत्तरमग्निसंस्थाप्यईशानादितुलास्थदेवताभ्योप्याज्याहुतयश्चेच्छंतीति ॥ तुलाप्रतिग्रहप्रायश्चित्तंत्वाचार्यश्चांद्रायणमेकंकुर्यात् प्रतिग्रहानुसारेणइत्युक्तं दानोद्द्योते रहस्येषु ॥ हेमाद्रौ मात्स्ये ॥ नचिरंधारयेद्गेहे सुवर्णंतोलितंबुधः ॥ तिष्ठद्भयावहंयस्माच्छोकव्याधिकरंनृणाम् ॥ शीघ्रंपरस्वीकरणाच्छ्रेयः प्राप्नोतिपुष्कलम् ॥ इति ॥ सुवर्णादिसर्वद्रव्यतुलास्वेवंकैमुतिकन्यायात् ॥ अत्रत्यः सुवर्णशब्दोरजतादिसर्वद्रव्यतुलोपलक्षकोबोध्यः ॥ मीमांसैकधुरंधरःश्रुतिधरो न्यायेऽपिवागीश्वरःसाहित्येमृतसागरःसुजनतावल्लीरसालद्रुमः ॥ यद्विद्वन्मणिशेखरोदि

नकरःप्रासूतविश्वेश्वरेतेनाकारिघृतादितोलनविधौसत्प्रीतयेपद्धतिः ॥ इतिदानोद्द्योतदानर
त्नमयूखाद्यनुसारेणच कालोपनामकभट्टदिवाकरकृतदानसंक्षेपचंद्रिकायां ताम्रघृतादितु
लापुरुषदानप्रयोगः ॥ ॥ अथगोसहस्रमहादानप्रयोगः ॥ हेमाद्रौ मात्स्ये ॥ गोसहस्रदा
नंचिकीर्षुरधिवासनदिनात्प्राक्त्रिरात्रमेकरात्रंवाशक्तितः पयोव्रतोऽधिवासनदिनेशुचिर्यजमा
नोदेशकालौसंकीर्त्य ममसमस्तपापक्षयोत्तरसिद्धचारणसेविताकेवर्णकिंकिणीजालमालिवि
मानारोहणोत्तरानेकमन्वंतरावच्छिन्नेंद्रादिसकललोकपाललोकाधिकरणकपुत्रपौत्रसमन्वित
शिवालयगमनेकोत्तरसंख्यासंख्येयपितृमातामहकुलतारणाकल्पशतावच्छिन्नशिवपुरनिवा
सानंतरराजराजीभवनाश्वमेधशतकर्तृत्वशिवध्यानपरत्वविष्णुसाहश्यापन्नयोगस्थानकसंसा
रमोचनकामः श्रीगोसहस्रमहादानंप्रतिपादयिष्ये ॥ इतिसंकल्पयेत् ॥ ततउपवासगुर्वा
दिनियोगांतंतुलापुरुषमहादानवत्कुर्यात् ॥ ॥ अथाचार्यः एकंलक्षण्यंनंदिकेश्वरंवृषं
सवत्सदशोत्तरगोसहस्रात्सवत्संधेनुदशकंच स्वर्णघंटास्वर्णपट्टकौशेयवस्त्रमाल्यहेमरत्न
युतशृंगरौप्यखुरचामरोपशोभितं सताम्रदोहनं पादुकोपानच्छत्राद्यनेकोपस्करयुतंवेदीं
परितःस्थापयेत् ॥ मंडपाद्बहिस्तु यथावकाशंगोसहस्रं वस्त्रमाल्यस्वर्णशृंगरौप्यखुराद्यैर

ळंकृत्याधिवासयेत् ॥ अथामादितसगोवृषदशकमध्येचक्रोपस्थापितलवणद्रोणोपरि पूर्वो
क्तळक्षणंकौशेयसंवीतंनानाभरणभूषितंमाल्येक्षुफलसंयुक्तंनंदिकेश्वरंस्थापयेत् ॥ वेद्युपरिफ
ळपुष्पादिशोभितंपंचवर्णवितानंकूटेबध्नीयात् ॥ ततः आचार्योदयःस्वस्वकुंडसन्निधौसर्वौप
ध्यादियुतकळशचतुष्टयस्थापनादियजमानाभिषेकांतंतुलामहादानवत्कुर्युः ॥ ततः शुक्लमा
ल्यांबरधरःसकुसुमांजळिनासवृषगोदशकमामंत्रयेत् ॥ तत्रमंत्रः ॥ नमोवोविश्वमूर्तिभ्योवि
श्वमातृभ्यएवच ॥ लोकाधिवासिनीभ्यश्चरोहिणीभ्योनमोनमः ॥ गवामंगेषुतिष्ठंतिभुवनान्ये
कविंशतिः ॥ ब्रह्मादयस्तथादेवारोहिण्यःपांतुमातरः ॥ गावोमेअग्रतःसंतुगावोमेसंतुपृष्ठतः॥
गावोमेहृदयेसंतुगवांमध्येवसाम्यहम् ॥ यस्मात्त्वंवृषरूपेणधर्मएवसनातनः ॥ अष्टमूर्तेर
धिष्ठानमतःपाहिसदामम ॥ इति पुष्पांजळिनासंपूज्य वेदिपश्चिमेप्राङ्मुखउपविश्य पूर्ववद्दे
शकालौस्मृत्वा ममसमस्तपापक्षयादिसंसारमोचनकामः इत्यंते इमंवृषं इमाश्च सवत्सधे
नुदशकसहिताःसहस्रंगाः सांगोपांगाः अमुकामुकगोत्रामुकामुकवेदाध्यापकामुकामुकशर्म
भ्योगुर्वृत्विगादिभ्यश्चसंप्रपदेनमम इतिगुर्वादिहस्तेषुजलंदद्यात् ॥ तेच देवस्यत्वेतियजुषा
रुद्रायगामित्युक्त्वा पुच्छेषुप्रतिगृह्य स्वस्तीत्युक्त्वा यथाशाखंकामस्तुतिं कइदंकस्माअदा

दितिपठेयुः ॥ ततोयजमानः ॥ कृतस्यगोसहस्रमहादानकर्मणःसांगतासिद्ध्यर्थंग्रामंभूमिंवाद
त्वासुवर्णंदक्षिणात्वेनतुभ्यमहंसंप्रददे नमम इतिप्रत्येकंतेभ्योदक्षिणांदद्यात् ॥ ततः कृतस्य
गोसहस्रमहादानइत्यादि० सांगतासिद्ध्यर्थं नानानामगोत्रेभ्योब्राह्मणेभ्योयथाशक्तिभूयसीं
दक्षिणांदातुमहमुत्सृजेनममेति ॥ तथा पुनः कृतस्यइ० सांगतासिद्ध्यर्थंयथाशक्तिब्राह्मणा
न्यथाकालंयथोपपन्नेनान्नेनभोजयिष्येइतिसंकल्पयेत् ॥ ततः आचार्यः पुण्याहवा
चनाद्यावाहितदेवताःसंपूज्य उत्तिष्ठब्रह्मणस्पतइतिदेवान्विसृज्य तद्दिनेपयोव्रतमशक्तौयजमा
नोनक्ताशीब्रह्मचारीभवेत् ॥ ततः प्रमादात्कुर्वतांकर्म० यस्यस्मृत्या० कर्मेश्वरार्पणंकुर्यादि
ति ॥ इतिदानसंक्षेपचंद्रिकायां गोसहस्रमहादानप्रयोगः ॥ भविष्यपुराणे ॥ शतंगावःसवृषभाधे
नूपस्करसंयुताः ॥ दत्वातुब्राह्मणेभ्यस्तुविशुद्धेनांतरात्मना ॥ शिवादिसर्वलोकेषुयथेष्टंमोद
तेतुसः ॥ पुण्यकालेशुचिराचम्य देशकालौसंकीर्त्य ममसमस्तपापक्षयपूर्वकसिद्धचारणसेवि
ताकंवर्णंकिंकिणीजालमालिविमानारोहणोत्तरानेकमन्वंतरावच्छिन्नेंद्रादिसकललोकपालाधि
करणकपुत्रपौत्रसमन्वितशिवपुरादिसर्वलोकनिवासानंतरमंतेविष्णुसायुज्यावाप्तिकामोवृषा
धिकसालंकृतगोशतदानंकरिष्ये इतिसंकल्प्य गणपतिपूजनंसंक्षिप्तपुण्याहवाचनमात्रंकृत्वा

गोभ्योनमइतिसवृपभागाः संपूज्य ब्राह्मणेभ्योनमइतिब्राह्मणांश्चयथाशक्तिवस्त्रालंकारादिभिः संपूज्य प्रार्थयेत् ॥ तत्रमंत्राः गावः सुरभयोनित्यंगावोगुग्गुलुगंधिकाः ॥ गावः प्रतिष्ठाभूतानांगावः स्वस्त्ययनंमहत् ॥ अन्नमेवपरंगावोदेवानांहविरुत्तमम् ॥ पावनंसर्वभूतानांरक्षंतिचवहंतिच ॥ हविपामंत्रपूतेनतर्पयंत्यमरानपि ॥ महर्पीणांचहोतॄणांगावोहोमेप्रतिष्ठिताः ॥ सर्वेपामेवभूतानांगावः शरणमुत्तमम् ॥ गावः पवित्रंपरमंगावोमंगलमुत्तमम् ॥ गावः सर्वस्यलोकस्यगावोधन्याः सवाहनाः ॥ नमोगोभ्यः श्रीमतीभ्यः सौरभेयीभ्यएवच ॥ नमोब्रह्मसुताभ्यश्चपवित्राभ्योनमोनमः ॥ घृतक्षीरप्रदागावो घृतयोन्योघृतोद्भवाः ॥ घृतनद्योघृतावर्तास्तामेसंतुसदागृहे ॥ इतिगाः संप्रार्थ्य वृपभंप्रार्थयेत् ॥ धर्मस्त्वंवृपरूपेणजगदानंदकारक ॥ अष्टमूर्तेरधिष्ठानमतः पाहिसनातन ॥ इतिवृपभंप्रार्थयेत् ॥ ततः सलिलतिलकुशानादाय अद्येत्यादिममसमस्तपापक्षयेत्यादिविष्णुसायुज्यावाप्तिकामोवृपाधिकशतंगाः धेनूपस्कराः सहिरण्यदक्षिणायुताः रुद्रदेवतास्तन्मूल्योपकल्पितानिष्क्रयरजतमुद्रावानानानामगोत्रेभ्योब्राह्मणेभ्योदातुमहमुत्सृजेनममेति तेनभगवान्परमात्माश्रीपरमेश्वरः प्रीयताम् तत्सद्ब्रह्मार्पणमस्तु ॥ कृतस्यसवृपगोशतदानकर्मणः सांगता

सिद्ध्यर्थंब्राह्मणभोजनंभूयसींदक्षिणांचदद्यात् ॥ अथवा अद्येत्यादि० सवृषरुद्रदैवतसहि रण्यदक्षिणायथाशक्त्यलंकृतगोशतमूल्योपकल्पितनिष्क्रयरजतमुद्राः नानानामगोत्रेभ्योब्रा ह्मणेभ्योदातुमहमुत्सृजे नममेति ॥ ततोब्राह्मणभोजनंसंकल्प्य भूयसींदद्यात् ॥ इतिसवृ पगोशतदानप्रयोगः ॥ ॥ अथसवृषगोदानप्रयोगः ॥ भविष्ये ॥ दशगावः सवृषभा वृषभैकादशाः स्मृताः ॥ दत्वातुब्राह्मणेभ्यश्चसयातिपरमांगतिम् ॥ शिवादिसर्वलोकेषुय थेष्टंरमतेनरः ॥ इति ॥ पुण्यकालेशुचिराचम्य प्राणानायम्य देशकालौसंकीर्त्य ममसमस्तपा पक्षयपूर्वकशिवादिसर्वलोकनिवासांतेविष्णुसान्निध्यकामोवृषाधिकदशगोदानंकरिष्ये इतिसं कल्प्य गणपतिपूजनंपुण्याहवाचनमात्रंकृत्वा गोभ्योनमइतिसवृषागाःसंपूज्य ब्राह्मणेभ्योनमइ तिब्राह्मणांश्चयथाशक्तिवस्त्रालंकारादिभिः संपूज्य गाः प्रार्थयेदेतैर्मंत्रैः ॥ गावोमामुपतिष्ठंतुहे मशृंग्यः पयोमुचः ॥ सुरभ्यः सौरभेय्यश्चसरितः सागरास्तथा ॥ गावः पश्याम्यहंनित्यंगा वः पश्यंतुमांसदा ॥ गावोस्माकंवयंतासांयतोगावस्ततोवयम् ॥ गावोममाग्रतोनित्यंगावः पृष्ठतएवच ॥ गावोमेसर्वतश्चैवगवांमध्येवसाम्यहम् ॥ इतिगाः संप्रार्थ्य ॥ धर्मस्त्वंवृषरूपेण जगदानंदकारक ॥ अष्टमूर्तेरधिष्ठानमतः पाहिसनातनइति ॥ वृषभंचप्रार्थयेत् ॥ ततः सकु

शतिलजलमादाय ॥ अद्येत्यादि० ममसमस्तपापक्षयपूर्वकशिवविष्णुसान्निध्यावाप्तिकामोवृषा
धिकदशगाधेनूपस्कराः सहिरण्यदक्षिणायुतारुद्रदेवतास्तन्मूल्योपकल्पितनिष्क्रयरजतमु
द्रावानानानामगोत्रेभ्योब्राह्मणेभ्योदातुमहमुत्सृजे नममेतिसंकल्पंकुर्यात् ॥ ततोब्राह्मणभो
जनसंकल्पः ॥ भूयसींचदद्यात् ॥ अथवावृषाधिकधेनूपस्करसहिरण्यदक्षिणायुतदशगारु
द्रदैवतास्तन्मूल्योपकल्पितरजतमुद्राः नानानामगोत्रेभ्योब्राह्मणेभ्योदातुमहमुत्सृजे नम
मेत्युक्त्वादद्यात् ॥ ब्राह्मणभोजनसंकल्पंकृत्वा भूयसींचदद्यादितिसंक्षेपः ॥ इतिस
वृषदशगोदानप्रयोगः ॥ ॥ अथदशमहादानानि ॥ कौर्मे ॥ कनकाश्वतिलानागादा
सीरथमहीगृहाः ॥ कन्याचकपिलाधेनुर्महादानानिवैदश ॥ तत्रप्रथमंतावत्सुवर्णदानम् ॥
मूले ॥ दत्त्वासुवर्णस्यशतंविप्रेभ्यः श्रद्धयान्वितः ॥ ब्रह्मलोकमनुप्राप्यब्रह्मणासहमोदते ॥
गव्येनभूमिंशकृताजलेन आलिप्यमध्येसिततंडुलैश्च ॥ सरोरुहंकेसरभूषणाढ्यंसकर्णिकंचाष्ट
दलंविलिख्य ॥ तस्मिन्हिरण्यशतमानमात्रंनिधाय तस्योपरितंविचिंत्य ॥ इति ॥ तत्रब्रह्मा
णंकमलासनस्थंसंपूज्य विप्रंवृत्वा यथाविभवंवस्त्रालंकारादिभिः संपूज्य दद्यात् ॥ हेमाद्रौ दा
नकांडे ॥ देयंतद्योजयेत्पूर्वंततोविप्रंचपूजयेत् ॥ तत्तन्मंत्रैः प्रदद्याद्वैसर्वदानेष्वयंविधिः ॥

इति ॥ अद्येत्यादि० ममसमस्तपापक्षयपूर्वकमेरुदानसमफलावाप्तये देयद्रव्यतृतीयांशदक्षि
णासहितं इदंसुवर्णं अग्निदैवतं अमुकगोत्रायामुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे नममेतिद
द्यात् ॥ प्रार्थनामंत्रः ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ अनंतपुण्यफलदमतः शांतिं
प्रयच्छमे ॥ इतिकनकदानम् ॥ अथाश्वदानंमहाभारते ॥ सर्वोपकरणोपेतंयुवानंदोपवर्जित
म् ॥ योऽश्वंददातिविप्रायस्वर्गेलोकेमहीयते ॥ तथा यावंतिरोमाणिहयेभवंतिहिनरेश्वर ॥
तावंतोवाजिदाँल्लोकान्प्राप्नुवंतीहपुष्कलान् ॥ इति ॥ वाजिदान्सूर्यलोकान् ॥ कौर्मे ॥ शतैः
पंचपलैरौप्यैः सुवर्णालंकृतिक्रमात् ॥ सदक्षिणंसवस्त्रंचब्राह्मणायनिवेदयेत् ॥ ब्राह्मणंवृ
त्वा वस्त्रालंकरणगंधपुष्पादिभिरभ्यर्च्य दद्यात् ॥ अद्येत्यादि० ममसमस्तपापक्षयपूर्वका
श्वरोमसमसंख्याकाब्दसूर्यलोकनिवासावाप्तिकामइममश्वं सर्वोपस्करांहिरण्यदक्षिणायुतं य
मदैवतं गोत्राय शर्मणेतुभ्यमहंसंप्रददेत्यादद्यानममेति अश्वकर्णधृत् ॥ दानमंत्रस्तु ॥
उच्चैःश्रवास्त्वमश्वानांराज्ञांविजयकारक ॥ सूर्यवाहनमस्तुभ्यमतः शांतिंप्रयच्छमे ॥
अथश्वेताश्वदानं ॥ गारुडे । अश्वमेधमखंयस्तुकर्तुंकर्तुंमुनीश्वर ॥ अश्वदानं
तुतेनेहकर्तव्यंविधिपूर्वकम् ॥ विधिंतस्यप्रवक्ष्यामिब्रह्मणानिर्मितंपुरा ॥ श्वेतमश्वं

शुभंतातहेमपल्याणभूषितम् ॥ रूप्यैस्तुकटकैः शुद्धैः करिदंतोपशोभितम् ॥ वज्रने
त्रंखुरैस्ताम्रैः क्षौमपुच्छंसुवाससम् ॥ शुभ्रेणपदकेनैवसंयुतंस्वायुधान्वितम् ॥ धान्यर
त्नोपरिस्थंतुवद्धंपक्षसुपट्टकम् ॥ एवंसुतेजसंचाश्वंब्राह्मणायनिवेदयेत् ॥ मन्वादियुगाद्यय
नविषुवोपरागादिपुण्यकालेदानंकार्यम् ॥ ब्राह्मणंवृत्वावस्त्रालंकारादिभिः संपूज्याश्वंचसंपूज्य
वदेत् ॥ मार्तंडायसुवेगायकाश्यपायत्रिमूर्तये ॥ जगद्दीपायसूर्यायत्रिवेदायनमोस्तुते ॥
एवंतमुच्चरन्मंत्रंकर्णेदद्यात्तिलोदकम् ॥ दानवाक्यंतु अद्येत्यादि० गोत्रायशर्मणेब्राह्मणा
येमंश्वेताश्वं सुवर्णतिलकालंकारयुतं ललाटग्रैवेयकपूर्वोक्तालंकारैर्युक्तंगंधपुष्पाद्यर्चितं सू
र्ययमदैवतं सकलब्रह्महत्यादिपापनाशकामोहयरोमसमसंख्याकाब्दसूर्यलोकनिवासकामश्च
सालंकृतायतुभ्यमहंसंप्रददे नमम इति ॥ ततोऽश्वप्रार्थना ॥ महार्णवसमुत्पन्नउच्चैःश्र
वसपुत्रक ॥ मयात्वंविप्रमुख्यायदत्तोहयसुखीभव ॥ इति ॥ ततोविप्रप्रार्थना ॥ इमंवि
प्रनमस्तुभ्यमश्वतेप्रतिपादितम् ॥ प्रतिगृह्णीष्वविप्रेंद्रमयादत्तंसुशोभनम् ॥ इतिदानमंत्र
मुच्चार्य कर्णेसमर्पणंकृत्वा विप्रहस्तेजलंक्षिपेत् ॥ ततः सुवर्णदक्षिणांदद्यात् ॥ विप्रोदे
वस्यत्वेतिगृहीत्वा यथाशाखंकामस्तुतिंपठित्वा स्वस्तीत्युक्त्वाश्वमारुह्यगच्छेत् ॥ दाताचा

॥ श्वेतम
श्वपुरोगच्छेत्पदानांसप्तसप्ततिम् ॥ भास्करंमनसिध्यात्वाआलोक्यस्वगृहंव्रजेत् ॥ इति ॥ इतिश्वेताश्व
श्वंतुयोदद्यात्फलंदशगुणंभवेत् ॥ एवंकृतेनरव्याघ्रसूर्यलोकंव्रजेन्नरः ॥ इति ॥ इतिश्वेताश्व ॥ सो
दानम् ॥ अथशिवायाश्वदानम् ॥ गारुडे । शिवायाश्वमलंकृत्य यः पर्वणिनिवेदयेत् ॥ अथतिलदान
श्वमेधस्ययज्ञस्यफलमष्टगुणंलभेत् ॥ इति शिवधर्मेपिशिवायाश्वदानम् ॥ यःप्रयच्छेद्विजातिभ्यः
म् ॥ आदित्यपुराणे वैशाख्यांपौर्णमास्यांवातिलान्क्षौद्रेणसंयुतान् ॥ अश्वमेधस्ययज्ञ
सर्वपापैःप्रमुच्यते ॥ तथा ॥ ज्येष्ठेमासितिलान्दद्यात्पौर्णमास्यांविशेषतः ॥ सर्वसत्वस
स्यफलमाप्नोति मानवः ॥ तथा ॥ माघेमासितिलान्यस्तुब्राह्मणेभ्यःप्रयच्छति ॥ दत्ता
माकीर्णंनरकंनसपश्यति ॥ विष्णुधर्मोत्तरे ॥ तिलागावोहिरण्यंचअलंकन्यावसुंधरा ॥
न्येतानिविधिवत्तारयंतिमहाभयात् ॥ तथा ॥ तिलस्नायीतिलोद्वर्तीतिलहोमीतिलोदकी ॥
तिलभुक्तिलदाताचषट्तिलाः पापनाशनाः ॥ इदंतुमाघमासपरम् ॥ अन्यत्रतुदानमेव ॥
कौर्मे ॥कृष्णाजिनेतिलान्कृत्वासुवर्णमधुसर्पिषी ॥ द्रोणैकंवाससाच्छन्नंत्रिधातद्व्रसदक्षिणम्॥
ब्राह्मणायचतंदत्वासर्वंतरतिदुष्कृतम् ॥ इति ॥ अद्येत्यादि० अमुकगोत्रायामुकशर्मणे ब्रा
ह्मणायसुपूजिताय कृष्णाजिनस्थं सुवर्णमधुसर्पियुतं वस्त्राच्छन्नं तिलद्रोणं सोमदैवतं सर्वपाप

क्षयकामस्तुभ्यमहंसंप्रददे नमम इतिदद्यात् ॥ कृतैतत्तिलद्रोणदानस्यसांगतासिद्ध्य
र्थंइदंसुवर्णमग्निदैवतंदक्षिणात्वेनतुभ्यमहंसंप्रददे नमम इतिदद्यात् ॥ प्रतिग्रहीतातु
देवस्यत्वेतितांप्रतिगृह्य यथाशाखंकामस्तुतिंपठित्वा समापयेत् ॥ इतितिलद्रोणदानवि
धिः ॥ ॥ अथतिलपात्रदानम् ॥ ब्राह्मे ॥ ताम्रपात्रंतिलैः पूर्णंप्रस्थमात्रंद्विजायच ॥ सहिर
ण्यंचयोदद्यात्प्रत्यहंश्रद्धयान्वितः ॥ सर्वपापविशुद्धात्मालभतेपरमांगतिम् ॥ इति ॥ अद्ये
त्यादि० इदंतिलपूरितताम्रपात्रं सोमदैवतं ससुवर्णममुकगोत्रायामुकशर्मणेब्राह्मणायाशेषपा
पक्षयकामस्तुभ्यमहंसंप्रददे नमम इति ॥ मंत्रस्तु ॥ तिलाः स्वर्णयुतास्तुभ्यंप्रदत्ताह्यघनाश
नाः ॥ विष्णुप्रीतिकरानित्यमतः शांतिंप्रयच्छमे ॥ प्रतिग्रहः प्राग्वत् ॥ इतिमाघेनि
त्यंतिलपात्रदानम् ॥ कौर्मे ॥ ताम्रपात्रेतिलान्कृत्वापलषोडशकल्पिते ॥ ससुवर्णंनश
क्त्यावाविप्रायप्रतिपादयेत् ॥ नाशयेत्त्रिविधंपापंवाङ्मनः कायसंभवम् ॥ तिलपूर्णंताम्र
पात्रंसहिरण्यंद्विजायवै ॥ प्रातर्दत्त्वातुविधिवद्दुःस्वप्नंविनिहंतिसः ॥ तिलपात्रंत्रिधाप्रोक्तंक
निष्ठोत्तममध्यमम् ताम्रपात्रेदशपलंजघन्यंपरिकीर्तितम् ॥ द्विगुणंमध्यमंप्रोक्तंत्रिगुणंचो
त्तमंस्मृतम् ॥ स्वर्णमेकंजघन्यंतुद्विगुणंमध्यमंमतम् ॥ त्रिगुणंचोत्तमंतद्वत्सुवर्णपरि

कीर्तितम् ॥ पलसंख्यानिष्कद्वयमिता सपादनिष्कद्वयमितेत्यन्ये ॥ अत्रदेशाचारतोऽव्य
वस्था ॥ दानवाक्यंतुनित्यातिलपात्रदानवत् ॥ मंत्रस्तु ॥ यानिकानिचपापानिब्रह्महत्यास
मानिच ॥ तिलपात्रप्रदानेनतानिनश्यंतुमेसदा ॥ इति ॥ इतिमहातिलपात्रदानम् ॥ कौर्मे ॥
अथमातुरानृण्यकृत्तिलपूर्णकांस्यपात्रदानम् ॥ आदित्यपुराणे ॥ यज्ञंसौत्रामणिंकर्तुंयदिश
क्तिर्नविद्यते ॥ महासरस्तथावापींकूपंकर्तुंचदीर्घिकाम् ॥ एवंकृतेमातृऋणान्मुक्तोभवतिमा
नवः ॥ सदक्षिणंकांस्यपात्रंदत्वाचैवप्रमुच्यते ॥ शुद्धकांस्यपात्रस्यप्रमाणंपंचविंशतिपला
नि ॥ तिलानामत्रनिर्दिष्टंप्रस्थानांसप्तकंतथा ॥ सुवर्णमाषाश्चत्वारः पात्रस्योपरिधारयेत् ॥
वस्त्रेणवेष्टयेत्पात्रंविधायचसुभक्तितः ॥ स्नानंकृत्वानिम्नगायांपितॄन्देवांश्चतर्पयेत् ॥ ततो
भिपूजयेद्देवंशंकरंहरिमेववा॥ गोमयेनाथसंलिप्यगृहमध्यंतुसर्वतः ॥ लिखेत्पद्मंद्वादशारंकुंकुमे
नाथशोभनम्॥ततोवह्निंसुसंस्थाप्यहोमंकुर्याद्यवैस्तिलैः ॥ पद्मेपात्रंप्रतिष्ठाप्यपूजयेद्भक्तिभाव
तः ॥ ततोब्राह्मणमाहूयबहुपुत्रंसुसंभृतम् ॥ पादौप्रक्षाल्यविधिवन्मातुःश्राद्धंसमाचरे
त् ॥ अथकृत्स्नंयथाशक्तिमाघ्यांवामृतवासरे ॥ ग्रहणेरविसोमाभ्यांसंक्रांतिषुयुगादिषु ॥ तथा
न्यदपियद्दत्तंमाघ्यामुद्दिश्यमातरम् ॥ तदक्षय्यफलंसर्वंपुराप्राहमहेश्वरः ॥ जीवंतींभूषयेद्वस्त्रै

माल्यैरपिविभूषणैः ॥ दत्वाविप्रस्यतत्पात्रंहोमंकुर्यात्प्रयत्नतः ॥ सोपस्करंसतांबूलंक्षमा
प्यचविसृज्यच ॥ अन्येषामपिविप्राणांभोजनानिप्रदापयेत् ॥ अथास्यप्रयोगः ॥ माघ्यांपूर्वो
क्तपुण्यकालेवा यजमानः कृतनित्यक्रियः पूर्वोक्तद्वादशारपद्मेकांस्यपात्रं सप्तप्रस्थतिलैः
पूरितंस्थापयित्वा हरंहरिंवासंपूज्य तत्पुरतोग्नौविष्णुंविष्णुमंत्रेणशिवंशिवमंत्रेणवाष्टोत्तर
शतंघृताक्ततिलैर्यवैश्चहुत्वा ब्राह्मणमाहूयोदङ्मुखमुपवेश्यादौपादप्रक्षालनादिमातृश्राद्धंस
माप्याचम्यप्राणानायम्य अद्येत्यादि० अमुकगोत्रायामुकशर्मणेब्राह्मणाय उक्तोपस्कर
संयुतंममामातुर्गर्भधारणपोषणमलमूत्रादिनानादुःखोद्भवाद्यानृण्यत्वकामः इदंपंचविंशति
पलात्मकंकांस्यपात्रं सप्तप्रस्थमिततिलैः परिपूरितंमाषचतुष्टयसुवर्णयुतं वस्त्रसंवेष्टितं
सर्वोपस्करयुतं तुभ्यमहंसंप्रददे नमम इति दद्यात् ॥ मंत्रास्तु ॥ कांस्यपात्रंमयादत्तंमातुरा
नृण्यकाम्यया ॥ भगवन्वचनात्तुभ्यंयथाशक्तिस्तथावद ॥ दशमासाश्चउदरेजनन्याः संस्थि
तस्यमे ॥ क्लेशितावालभावेनस्तनपानाद्विजोत्तम ॥ मलमूत्रादिमल्लेपलिप्तायाचकृतामया ॥
भवतोवचनादद्यममुक्तिर्भवेदृणात् ॥ तिलसंख्याकृतंदुःखंजनन्याममसेवितम् ॥ कांस्यपा
त्रप्रदानेनकृतकृत्योभवाम्यहम् ॥ ततः शक्त्याहिरण्यं दक्षिणांदद्यात् ॥ त्वयैतत्कृततिलपू

र्णकांस्यपात्रदानेनजननीसंभवादृणात्त्वंमुक्तोभवेतिप्रतिग्रहीतावदेत् ॥ पुनः व्याहृतिभिरा
ज्यहोमंकृत्वाविसृज्य यथाशक्तिब्राह्मणान्भोजयित्वा सुहृद्युतोभुंजीतेति ॥ इतिमातुरानृ
ण्यकृत्तिलपूर्णकांस्यपात्रदानप्रयोगः ॥ ॥ अथतिलपूर्णकरकदानम् ॥ वायवीये ॥
करकंतिलसंपूर्णंमंडलेवह्निदेवते ॥ शिवंवह्निवदाराध्यंपूजयेत्करवीरकैः ॥ पूजातुरक्तचं
दनेन ॥ निर्यासर्जरसधूपेनधूपयेत् ॥ वह्निमंडलंत्रिकोणमंडलम् ॥ शिवंवह्निवदितिवह्निस्व
रूपंशिवम् ॥ ब्रह्मांडपुराणे ॥ आदर्शंचततोदद्याद्दीपानांचचतुष्टयम्॥ वह्निरूपीयतः शंभुर्व
ह्निरूपास्तिलाश्रये ॥ तेजोरूपंकृतंपापंचाक्षुपंचव्यपोहतु ॥ इतिदत्तेस्यनश्यंतिपापान्यग्रेकृ
तानिच ॥ यएवंकुरुतेदानंशिवभक्त्यायतव्रतः ॥ शिवलोकेवसेद्भूयः कल्पत्रयमशंकितः ॥
इतितिलपूर्णकरकदानम् ॥ ॥ अथगजदानम् ॥ कौर्मे ॥ दद्याद्गजंपुराणोक्तंमूल्यंपंचशता
निवा ॥ वित्तानुसारात्तत्रापिकनिष्ठोत्तममध्यमम् ॥तत्रापिस्वरूपतोगजदानमुक्तम् ॥ तन्मू
ल्यंचहेममापशतपंचकदानेमध्यमम् ॥ शतत्रयहेममापदानंकानिष्ठम् ॥ इति ॥ रूप्यस्थूणालं
करणंस्वर्णतारांविभूपणम्॥सदक्षिणंवित्तशक्त्यादत्वाशिवपुरंव्रजेत्॥स्थूणारज्जुः॥तारामौक्ति
कजालीगजालंकारः॥ कौर्मे॥यथालाभोपपन्नंवायःप्रयच्छतिदंतिनम्॥ब्राह्मणायदरिद्रायस्वर्ग

लोकेमहीयते ॥ इति ॥ ततोगजदानांगंशिवंद्विजंचसंपूज्यदद्यात् ॥ दानवाक्यंतु अद्येत्या
दि० ममसर्वपापक्षयोत्तरसिद्धचारणसेवितार्ककिंकिणीजालमालिविमानारोहणोत्तरानेकमन्वं
तरावच्छिन्नाक्षय्यदेवराजत्वांतेविष्णुपुरावाप्तिकामस्तत्प्रीतिकामश्च सालंकृतायामुकगोत्रा
यामुकशर्मणेब्राह्मणायेमंगजं कक्षारज्जुस्थिरासनसहितं कांचनमालादिकीर्णं चामरगंधपु
ष्पाद्यलंकृतं प्रजापतिदैवतं तुभ्यमहंसंप्रददेनममइतिकरंधृत्वादद्यात् ॥ करःशुंडादंडः ॥ कृ
तद्गजदानकर्मणः सांगतासिद्ध्यर्थमिदंसुवर्णमाग्नेदैवतं दक्षिणात्वेनतुभ्यमहंसंप्रददे नमम
इति दद्यात् ॥ ततोद्विजोगजमारुह्य देवस्यत्वायथाशाखंकामस्तुतिंपठित्वा ॥ प्रतिगृ
ह्णामीति स्वस्तीतिचवदेत् ॥ यजमानोगजंप्रार्थयेदेतैर्मंत्रैः ॥ ऐरावतश्चतुर्दंतोगजानांनाय
कस्तुयः ॥ दिग्दंतिनांपूज्यतमः पापंक्षयतुनःप्रभुः ॥ सुप्रतीकगजेंद्रत्वंसरस्वत्याभिषेच
क ॥ इंद्रस्यवाहनश्रेष्ठसर्वदेवैस्तुपूजित ॥ गजेंद्रमत्तमातंगदैत्यसैन्यविनाशक ॥ तवदा
नेनमेशांतिः सर्वदास्तुमहत्सुखम् ॥ इति ॥ ब्राह्मणैस्तथास्तुइत्युक्तोभूयसींदद्यादिति ॥ इति
गजदानप्रयोगः ॥ ॥ अथदासीदानम् ॥ वह्निपुराणे. स्थिरनक्षत्रसंयुक्तेसौम्येसौम्यग्रहान्वि
ते ॥ दानकालंप्रशंसंतिसंतः पर्वणिवापुनः ॥ अलंकृत्ययथाशक्त्यावासोभिर्भूषणैस्तथा ॥

ब्राह्मणायप्रदातव्यायजमानेनशक्तितः॥पंचवर्षाधिकासातुचत्वारिंशत्समावधि ॥दासीद्विजाय
दातव्यादासीदानेत्वयंविधिः इति ॥ दानवाक्यंतु ॥ अद्येत्यादि० गोत्रायशर्मणेसालंकृताय
सुवर्णालंकारवतीं गंधपुष्पाद्यर्चितां प्रजापतिदैवत्यां अक्षय्यसुखावाप्तिकामस्तुभ्यमहंसंप्रद
दे नममेतिशिरसिधृत्वादद्यात् ॥ द्विजप्रार्थनामंत्रस्तु वह्निपुराणे ॥ इयंदासीमयातुभ्यंश्रीव
त्सप्रतिपादिता ॥ सर्वकामकरीभोग्यायथेष्टंभद्रमस्तुमे ॥ ततः सुवर्णदक्षिणांदत्वानमस्कु
र्यात् ॥ अनुगत्वातुसीमायांद्विजंचैवविसर्जयेत् ॥ इति ॥ इतिदासीदानम् ॥ ॥ अथरथदा
नम् ॥ कौर्मे ॥ रथंचतुर्बलीवर्दैरूढंधान्यावृतंतथा ॥ वित्तानुसारात्सर्वैश्चरथोपकरणैर्युतम् ॥
सदक्षिणंचविप्रायदत्वाशिवपुरंव्रजेत् ॥ धान्यावृतमष्टादशधान्यावृतम् ॥ रथोपकरणानियुग
योक्त्रतोत्रवरत्रादीनि ॥ दक्षिणाचत्रिशतमाषमितसुवर्णमुत्तमा द्वेशतेमध्यमा अधमाशते
कमितित्रैविध्यमाह हेमाद्रिः ॥ दानवाक्यंतु । अद्येत्यादिगोत्रायशर्मणेसालंकृताय चतु
र्बलीवर्दैर्युक्तं सोपस्करंधान्यैरष्टादशभिर्युतं विश्वकर्मदैवतं अक्षय्यस्वर्गादिसुखावाप्तिकाम
स्तुभ्यमहं संप्रददे नममेति ॥ मंत्रस्तु । रथायरथनाथायनमस्तेविश्वकर्मणे ॥ विश्वरू
पायदेवायअरुणायनमोस्तुते ॥ सुवर्णदक्षिणांदद्यात् ॥ इतिरथदानम् ॥ ॥ अथगंत्री

रथदानम् ॥ गारुडे । गंत्रींतुरंगसंयुक्तांयोददातिद्विजातये ॥ सर्वकामसमृद्धात्मासराजा
जायतेभुवीति ॥ गंत्रीरथविशेषः साचतुर्भिर्गजैरश्वैर्वृषैर्वोपेता द्वाभ्यांवोपेता ॥ दानवा
क्यंतु पूर्ववत् ॥ मंत्रस्तु । गंत्रीमिमांप्रयच्छामिविश्वकर्माधिदैवताम् ॥ दानेनानेनभग
वान्प्रीयतांमेपरः पुमानिति॥ततःसुवर्णदक्षिणांदद्यात्॥इतिगंत्रीसहितरथदानम् ॥ ॥ अथप्र
संगाच्छिबिकादानम् ॥ हेमाद्रौ मात्स्ये ॥ मार्गशुक्लैकादश्यां माघफाल्गुनयोर्वैशाखेवा हि
रण्मयं हरिमभ्यर्च्य रात्रौजागरणं कृत्वा प्रातः कृतनित्यक्रियः अद्येत्यादि गोत्रायशर्मणे
सुपूजिताय इमांशिबिकामुक्तोपस्करां अंगिरोदैवतां इष्टलोकाप्तयेतुभ्यमहंसंप्रददे नममेति॥
ततः सुवर्णदक्षिणांदद्यात् ॥ तत्रैव वह्निपुराणे । देवलोकेविपुलभोगानंतरमंतेविष्णुसायुज्या
वाप्तिकामोविप्रस्यवर्षाशनंशिबिकावाहकानांचवर्षपर्याप्तमन्नंदद्यात् इति ॥ द्विजप्रार्थनामंत्र
स्तु । शिबिकातेमयादत्तायथाशक्त्याविभूषिता ॥ द्विजत्वंप्रतिगृह्णीष्ववांछितंतेनमेभवेत्
इति ॥ इतिशिबिकादानम् ॥ ॥ अथमहीदानम् ॥ कौर्मे । गोचर्ममात्रभूखंडमधिकंवा
स्वशक्तितः ॥ विधिंसदक्षिणंकृत्वादत्वाशिवपुरंव्रजेत् इति ॥ त्रिद्व्येकसुवर्णदक्षिणेत्यर्थः ॥
अपिगोचर्ममात्रेणसम्यक्दत्तेनमानवः ॥ धौतपापोविशुद्धात्मास्वर्गलोकेमहीयते इति ॥

तथा।दशहस्तेनदंडेनत्रिंशद्दंडानिवर्तनम्॥त्रिभागहीनंगोचर्ममानमाहप्रजापतिः॥तथा । गवां शतंवृषश्चैकोयत्रातिष्ठेदयंत्रितः ॥ तद्धिगोचर्ममात्रंतुप्राहुर्वेदविदोजनाः ॥ तथा । षष्टिवर्षसहस्राणिस्वर्गेवसतिभूमिदः ॥ आच्छेत्तावानुमंताचतावंतिनरकेवसेत् ॥ भूमिंयः प्रतिगृह्णातिभूमिंयश्चप्रयच्छति ॥ तावुभौपुरुषौलोकेसूर्यमंडलभेदिनौ ॥ तथा । भूमिप्रदानपुण्यस्य कलांनार्हंतिषोडशीम् ॥ दानान्यन्यानिमेशांतिर्भूमिदानाद्भवत्विह इति ॥ दानवाक्यंतु । अद्येत्यादि गोत्रायशर्मणेसालंकृताय षष्टिवर्षसहस्रमितस्वर्गेशिवपुरनिवासकामः सर्वपापक्षयकामोवा इमांभूमिं सस्योद्भवां सवृक्षफलपुष्पाद्युपेतां विष्णुदैवतां तुभ्यमहंसंप्रददे नममेति साक्षतकुशतिलोदकंद्विजहस्तेदद्यात् ॥ ब्राह्मणस्तु भूमिंप्रदक्षिणांकुर्वन्प्रतिगृह्णीयात् ॥ देवस्यत्वेतियथाशाखंकामस्तुतिंपठित्वा स्वस्तीतिवदेच्च ॥ मांडव्यवचनादत्रसुवर्णदक्षिणा मता ॥ मंत्रस्तु । सर्वेषामाश्रयाभूमिर्वराहेणसमुद्धृता॥ अनंतसस्यफलदा अतःशांतिंप्रयच्छ मे ॥यस्यांरोहंतिबीजानिवर्षाकालेमहीतले॥ भूमेःप्रदानात्सकलामममसंतुमनोरथाःइति॥शिवधर्मे विश्वामित्रः । ग्रामंवानगरंवापिविप्रेभ्योयः प्रयच्छति ॥ क्षेत्रंवासस्यसंपन्नंसर्वपापैः प्रमुच्यत इति ॥ भूमिहरणेतु विश्वामित्रः । स्वदत्तांपरदत्तांवायोहरेच्चवसुंधरां ॥ षष्टिवर्षस

हस्राणिविष्ठायांजायतेक्रमिरिति ॥ सविष्ठायांकृमिर्भूत्वापितृभिः सहमज्जतीतिवा ॥ इतिशिव
धर्मोक्तंभूदानम् ॥ अथगृहदानम् ॥ कौर्मे । शक्तितः सर्ववित्तेनपूर्णंगृहमपित्रिधा ॥ सदाक्षिणं
द्विजेदत्वाब्रह्मलोकंव्रजेन्नरःइति ॥ गारुडे । ऐष्टिकंदारुकंवापिमृन्मयंवापिशक्तितः ॥ सर्वोप
करणोपेतंयोदद्याद्विपुलंगृहम् ॥ ब्राह्मणायदरिद्रायविदुषेचकुटुंबिने ॥ सर्वकामसमायुक्तोब्रह्म
सायुज्यमाप्नुयात् इति ॥ ब्रह्मवैवर्ते । नगार्हस्थ्यात्परोधर्मोनैवदानंपरंगृहात् ॥ नानृतादधि
कंपापंनपूज्योब्राह्मणात्परः इति ॥ गृहनिर्माणप्रकारमाह नारदः । स्नानागारंदिशिप्राच्या
माग्नेय्यांपचनालयम् ॥ याम्यांशयनगेहंचनैर्ऋत्यांशस्त्रमंदिरम्॥प्रतीच्यांभोजनागारंवायव्यां
पशुमंदिरम्॥भांडागारंतूत्तरस्यामैशान्यांदेवमंदिरम्इति॥कुर्यादितिशेषः॥तत्रकूपेदिग्विशेष
फलं देवीपुराणे ॥ पूर्वामाश्रित्यकर्तव्यः कूपःस्यादनिलेपिवा ॥ नपूर्वंव्यत्ययंकुर्यान्मध्येदेवा
लयाद्गृहात् ॥ कृतंभयप्रदंलोकेतथाचास्याग्निजंभयम् ॥ वायव्यांचापिदेवस्यभयदंजायतेकृ
तमिति ॥ वराहमिहिरः ॥ पुष्टिंभूतिंपुत्रहानिंपुरंध्रीनाशंमृत्युंसंपदंशस्त्रबाधाम् ॥ किंचित्सौ
ख्यंदिक्षुपूर्वादिकुर्यात्कूपोमध्येगेहमर्थक्षयंचेत्यादि ॥ मत्स्यपुराणे॥देवतापंचकंतत्रचत्वारिंश
त्समावृतम् ॥ पूजयित्वायथान्यायंततोदद्याद्गृहंगृही ॥ पूजयित्वास्वयंवास्तुशांतिंकृत्वादद्या

दित्यर्थः ॥ अथप्रसंगात्संक्षेपेणवास्तुशांतिप्रयोगः॥कर्ताशुभदिने आचम्यप्राणानायम्य देश
कालौसंकीर्त्य अस्यवास्तोः शुभतासिद्ध्यर्थंवास्तुशांतिंकरिष्ये इतिसंकल्प्य तदंगतयागणे
शपूजास्वस्तिवाचनमातृकापूजाभ्युदयिकश्राद्धाचार्यब्रह्मर्त्विग्वरणानिकृत्वा यथाविभववं
स्त्रालंकारादिभिः पूजयेत् ॥ ततआचार्यः यदत्रसंस्थितंभू० ॥ अपक्रामंतु० ॥ भूतप्रेतपि
शाचाद्याअपक्रामंतुराक्षसाः ॥ स्थानादस्माद्व्रजंत्वन्यत्स्वीकरोमिभुवंत्विमामित्यनेनसर्षपा
न्विकीर्य पंचगव्येन शुचीवोहव्येतितृचेन पुनंतुमांदेवजनाइतितृचेन गृहमाचिभीतएतोन्वि
न्द्रमितितृचेनचगृहंसंप्रोक्ष्य गृहमध्येप्राच्यामैशान्यांवा चतुरस्रंचतुरंगुलोच्चंहस्तमितंस्थंडिलं
कृत्वा तस्यऐशानादिकोणचतुष्टयेचतुरोलोहकीलानारोपयेत् ॥ तत्रमंत्रः ॥ विशंतुभूतलेना
गालोकपालाश्चसर्वशः ॥ अस्मिन्गृहेवतिष्ठंतुआयुर्बलकराःसदेतिमंत्रेणनिखनेत् ॥ प्रतिकी
लंमंत्रावृत्तिः ॥ ततः ईशानकोणादिक्रमेणचतुर्षुकोणेषु अग्निभ्योप्यथसर्पेभ्योयेचान्येतत्समा
श्रिताः ॥ तेभ्योबलिंप्रयच्छामिपुण्यमोदनमुत्तममितिमंत्रेणमंत्रावृत्त्यामाषभक्तबलीन्दत्त्वा
स्थंडिलोपरिकुंकुमादिनाहेमरूप्यशलाकयावा प्राक्पश्चायताः प्रागंताउदक्संस्थाद्व्यंगुलांत
राः प्रणवादिनमोंतैर्दशभिर्नामभिर्दशरेखाःकुर्यात्॥ ॐ ईशानायैनमः ॐयशोवत्यै०ॐकान्ता

यै० ॐविशालायै० ॐ प्राणवाहिन्यै० ॐसत्यै० ॐसुमत्यै ॐनंदायै० ॐसुभद्रायै० ॐसुरथायै०१०इतिदशरेखाः कृत्वा ॥ तथा ॐहिरण्यायै० ॐसुव्रतायै० ॐलक्ष्म्यै० ॐविभूत्यै० ॐविमलायै० ॐप्रियायै० ॐविजयायै०ॐज्वालायै० ॐविशोकायै० ॐइडायै० १० इतिदक्षिणोत्तरायताः उदगंताः प्राक्संस्थादशरेखाःकुर्यात् ॥एवमेकाशीतिपदं मंडलं संपद्यते तत्र मध्यस्थनवकोष्ठानिरेखामार्जनेनैकीकुर्यात् ॥ एतन्नवपदंब्रह्मस्थानं तस्यचतुर्दिक्षुचत्वारिपदानि विदिक्षुशृंखलाकाराणिद्वादशकोणचतुष्टयोभयतश्चाष्टावितिविंशत्येकपदानि ॥ अवशिष्टानिप्रतिदिशंपंचपंचेति विंशतिद्विपदानि ॥ तेषुप्रणवाद्यैश्चतुर्थ्यंतैर्नमोंतैर्वक्ष्यमाणनामभिर्देवताआवाह्य स्थापयेत् ॥ तत्रैशानकोणपदे वास्तोः शिरसि ॐशिखिनेनमःशिखिनमावाहयामि ॥ १ ॥ तद्दक्षिणैकपदे दक्षिणनेत्रे ॐपर्जन्यायन० ॥ २ ॥ आवाहयामीतिसर्वत्र ॥ तद्दक्षिणेततोपिपश्चिमतइतिपदद्वये दक्षिणश्रोत्रे ॐजयंतायन०॥३॥तद्दक्षिणपदद्वये दक्षिणांसे ॐकुलिशायुधाय० ॥४॥ तद्दक्षिणपदद्वये दक्षिणबाहौ ॐसूर्यायन० ॥५॥तद्दक्षिणपदद्वये दक्षिणबाहौ ॐसत्याय० ॥ ६ ॥ तद्दक्षिणपदद्वये दक्षिणकूर्परे ॐभृशाय० ॥ ७ ॥ तद्दक्षि

१ एतद्वास्तुमंडलंअनुक्रमणिकांतेविरचितंद्रष्टव्यम् ।

णे अंसपंक्तिगतैकपदे दक्षिणप्रबाहौ ॐ आकाशायन० ॥ ८ ॥ आग्नेयकोणपदे दक्षिणबाहौ
ॐ वायवेनमः ॥ ९ ॥ तत्पश्चिमैकपदे दक्षिणमणिबंधे ॐपूष्णेन०॥१०॥तत्पश्चिमेततोप्युत्त
रइतिपदद्वये दक्षिणपार्श्वे० ॐवितथाय० ॥ ११ ॥ तत्पश्चिमपदद्वये दक्षिणपार्श्वएव ॐगृ
हक्षताय० ॥ १२ ॥ तत्पश्चिमपदद्वयेदक्षिणोरौ ॐयमाय० ॥ १३ ॥ तत्पश्चिमपदद्वये द
क्षिणजानौ ॐगंधर्वाय० ॥ १४ ॥ तत्पश्चिमपदद्वये दक्षिणजंघायां ॐभृंगराजाय० ॥१५॥
तत्पश्चिमेबाह्यपंक्तिगतैकपदेदक्षिणस्फिचि ॐमृगाय० ॥ १६ ॥ नैर्ऋत्यकोणपदैकपदे पा
दयोः ॐपितृभ्यो० ॥ १७॥ तदुत्तरैकपदे वामस्फिचि ॐदौवारिकाय० ॥ १८ ॥ तदुत्तरे
ततोपिप्रागितिपदद्वयेवामजंघायां ॐसुग्रीवाय० ॥ १९ ॥ तदुत्तरेपदद्वये वामजानौ ॐ
पुष्पदंताय० ॥ २० ॥ तदुत्तरेपदद्वये वामोरौ० ॐजलाधिपाय० ॥ २१ ॥ तदुत्त
रेपदद्वयेवामपार्श्वे ॐ असुराय ० ॥ २२ ॥ तदुत्तरेपदद्वये वामपार्श्वएव ॐ शेषाय०॥२३॥
तदुत्तरेबाह्यपंक्तिगतैकपदे वाममणिबंधे० ॐ पापाय ० ॥ २४ ॥ वायव्यकोणपदे वामबाहौ
ॐ रोगाय ० ॥ २५ ॥ तत्प्रागेकपदे वामप्रबाहौ ० ॐ अहिर्बुध्न्याय ० ॥ २६ ॥ तत्प्रा
क्ततोपिदक्षिणेचेतिपदद्वये वामकूर्परे० ॐ मुख्याय० ॥ २७ ॥ तत्प्राक्पदद्वये वामबाहौ

ॐ भल्लाटाय० ॥ २८ ॥ तत्प्राक्पदद्वये वामबाहौ ॐ सोमाय० ॥२९ ॥ तत्प्राक्पदद्वये वामांसे ॐ सर्पेभ्योन० ॥ ३० ॥ तत्प्राक्पदद्वये वामश्रोत्रे ॐ दितयेन० ॥ ३१ ॥ तत्प्राक्बाह्यपंक्तिगतैकपदेवामनेत्रे ॐ अदितयेन० ॥ ३२ ॥ ततआग्नेय्यकोणपदादधःकोणपदे वामहस्ते ॐ आपायन० ॥ ३३ ॥ नैर्ऋत्यपदादधः कोणपदैकपदे. ॐ सावित्राय० ॥३४॥ वायव्यकोणाधःकोणपदेवामहस्ते ॐ जयाय० ॥ ३५ ॥ ईशानकोणपदाधःकोणपदेमेढ्रे ॐ रुद्राय० ॥ ३६ ॥ मध्यगतनवकोष्टकब्रह्मपदसंलग्नप्रागादिपदत्रये दक्षिणस्तने ॐ अर्यम्णे० ॥ ३७ ॥ तद्दक्षिणैकपदे दक्षिणहस्ते ॐ सवित्रेन० ॥ ३८ ॥ तत्पश्चिमेब्रह्मसंलग्नपदत्रयेजठरदक्षिणभागे ॐ विवस्वतेन० ॥ ३९ ॥ तत्पश्चिमैकपदेवृषणयोः ॐ विबुधाधिपाय० ॥ ४० ॥ तदुत्तरब्रह्मसंलग्नपदत्रये वामजठरभागे ॐ मित्राय० ॥४१॥ तदुत्तरैकपदे वामहस्ते ॐ राजयक्ष्मणे० ॥४२॥ तत्प्राक्पदत्रये वामस्तने ॐ पृथ्वीधरायन० ॥ ४३ ॥ तत्प्रागेकपदे उरसि ॐ आपवत्साय० ॥ ४४ ॥ ततोमध्यनवपदेहृन्नाभ्योः ॐ ब्रह्मणेन० ॥ ४५ ॥ तदुत्तरे वास्तोष्पतेर्वसिष्ठोवास्तोष्पतिस्त्रिष्टुप्वृपवास्तुप्रतिष्ठापनेविनियोगः ॥ ॐवास्तोष्पतेप्रतिजानी० ॥ इतिसुवर्णादिप्रतिमामग्न्युत्तारणपूर्वकंसंस्थाप्य ॥ मंडलाद्बहिरीशानादिकोणचतुष्टये

पु ॥ ॐ चरक्यै० ॥ ४६ ॥ ॐ विदार्यै० ॥४७॥ ॐ पूतनायैन० ॥४८॥ ॐ पापराक्षस्यैन०
॥४९॥ ततःपूर्वादिचतुर्दिक्षु ॐ स्कंदायन० ॥५०॥ ॐ अर्यम्णेन० ॥५१॥ ॐ जृंभकायन०
॥५२॥ ॐ पिलिपिच्छायन०॥५३॥ततःपूर्वाद्यष्टदिक्षु ॐ इंद्राय०॥१॥ ॐ अग्नयेन०॥२॥ ॐ यमा
य०॥३॥ ॐ निर्ऋतये० ॥४॥ ॐ वरुणायन०॥५॥ ॐ वायवेन० ॥६॥ ॐ कुबेरायन०॥७॥
ॐ ईशानाय० ॥६१॥ इत्यावाह्य वास्तुपीठदेवताभ्योनमइतिसंपूज्य मंडलादीशान्यांकलशं
संस्थाप्य तत्रवरुणाय० ॥ इतिवरुणंसंपूज्य प्रार्थयेत् ॥ यथामेरुगिरेःशृंगंदेवानामालयः सदा
॥ तथाब्रह्मादिदेवानांगृहेममस्थिरोभव इतिसंप्रार्थ्य ॥ ततः स्वतंत्रस्थंडिलेग्निस्थापनादिच
क्षुष्यंते उदुंबरादिसमित्तिलाज्यैर्वास्तुमंडलदेवताभ्योनाममंत्रैर्वास्तुमंत्रेणचहुत्वास्विष्टकृदा
दिपूर्णाहुत्यंतंकुर्यात् ॥ ततोमंडलदेवताभ्यः शिखिनेएषपायसबलिर्नममइत्यादिबलीन्दत्वा
कृणुष्वपाजइतिसूक्तादिनामंडलं त्रिसूत्र्यावेष्टयित्वा कलशोदकेनयजमानमभिषिच्य पुनः
संपूज्य यथाशक्तिदक्षिणांदत्वाब्राह्मणान्भोजयेदितिकेचित् ॥ शारदातिलकेतु होमोनोक्तः ॥
तिलादिद्रव्याणांविकल्प इतिमयूखकारः ॥ इदानींतुनवग्रहसंकलितमेवप्रयोगंकुर्वंतिसांप्रदा
यिकाः ॥ तद्यथा ॥ यथामेरुगिरेःशृंगमितिप्रार्थनोत्तरंवास्तुमंडलान्नैर्ऋत्यांपश्चिमायांवाकुंडे

स्थंडिलेवावरदनामानमग्निंप्रतिष्ठाप्याग्नेरीशान्यांग्रहान्ग्रहकलशंचसंस्थाप्य तत्रवरुणंसंपूज्य देवदानवसंवादइत्याद्यैः संप्रार्थ्यान्वादध्यात् ॥ अस्मिन्वास्तुशांतिकर्मण्यन्वाधानंकरिष्ये ॥ अस्मिन्नन्वाहितेग्नावित्यादि चक्षुष्यंतमुक्त्वात्रप्रधानम् ॥ आदित्यं सोमं भौमं बुधं बृहस्पतिं शुक्रं शनिं राहुं केतुं एताः नवग्रहदेवताः प्रत्येकमष्टोत्तरशतसंख्याकाभिरष्टाविंशतिसंख्याकाभिरष्टाष्टसंख्याकाभिर्वा अर्कादिसमिच्चर्वाज्याहुतिभिः ॥ तथा ईश्वरं उमां स्कंदं विष्णुं ब्राह्मणं इंद्रं यमं कालं चित्रगुप्तं अग्निं अपः भूमिं विष्णुं इंद्रं इंद्राणीं प्रजापतिं सर्पान् ब्रह्माणं विनायकं दुर्गां वायुं आकाशं अश्विनौ वास्तोष्पतिं क्षेत्रपालं इंद्रं अग्निं यमं निर्ऋतिं वरुणं वायुं कुबेरं ईशानं एताः प्रधानदशांशेन तत्तत्समिच्चर्वाज्याहुतिभिः ॥ तथा शिखिनं पर्जन्यं जयंतं कुलिशायुधं सूर्यं सत्यं भृशं आकाशं वायुं पूषणं वितथं ग्रहक्षतं यमं, गंधर्वं भृंगराजं मृगं पितॄन् दौवारिकं सुग्रीवं पुष्पदंतं जलाधिपं असुरं शेषं पापं रोगं अहिर्बुध्न्यं मुख्यं भल्लाटं सोमं सर्पं दितिं अदितिं आपं सावित्रं जयं रुद्रं अर्यमणं सवितारं विवस्वंतं विबुधाधिपं मित्रं राजयक्ष्माणं पृथ्वीधरं आपवत्सं ब्रह्माणं चरकीं विदारीं पूतनां पापराक्षसीं स्कंदं अर्यमणंजृंभकं पिलिपिच्छं एताः प्रधा

वाद्यादितूर्यघोषपूर्वकमाचार्यऋत्विग्भिः सहसकुटुंबोयजमानः रक्षोघ्नपावमानमंत्रै
थित्वा समंताद्व्रीहियवमतीभिरद्भिर्हिरण्यमवधाय शंतातीयेनशंनइंद्राग्नीतिपं
तेनारायणवृत्तिः ॥ शंतातीयेन इळेद्यावापृथिवीइतिपंचविंशतिऋग्भिः
ने ॥ तेननवाशंकानचोत्तरं ॥ त्रिः प्रदक्षिणंपरिव्रजन्प्रोक्षत्यविच्छि
पोहिष्ठामयोभुवइतितृचेन ॥ ततोविच्छिन्नक्षीरधारांचपरितोदत्वा वास्तु
सुरूपांपृथ्वींध्यात्वा पृथिव्यैनमः इतिसंपूज्य सर्वदेवमयंवास्तु सर्वदेवमयंपर
ठेत्वा ततोगृहस्याग्नेयकोणेआकाशपदे यजमानपदेनजानुमात्रंगर्तंखात्वा मध्ये
लेप्य शुभ्रचंदनपुष्पाक्षतैरलंकृत्य सर्वधान्यबीजानिदध्योदनंचाक्षिप्त्वा नवजलपूर्ण
तकपुष्पयुतंगंधाद्यर्चितमादाय जानुभ्यामवनिंगत्वा तज्जलंगर्ते ॐनमोवरुणाये
णक्षिपेत् ॥ जलेप्रदक्षिणावर्तेपुष्पेचोर्ध्वमुखेशुभम् ॥ ततोऽपक्वमृत्पेटिकायांशाल्यादि
सप्तधान्यबीजानिदध्योदनंशैवालंफलपुष्पाणिचाक्षिप्त्वा तूर्यघोषेणपूर्वस्थापितवृषवास्तुप्रति
मामानीय पेटिकायांसंस्थाप्य पेटिकांपिधाय पठेत्॥ पूजितोसिमयावास्तोहोमाद्यैरर्चनैः शु
भैः ॥ प्रसीदपाहिविश्वेशदेहिमेगृहजंसुखम् ॥ वास्तुमूर्तेनमस्तेस्तुभूशय्याभिरतप्रभो ॥ म

हृहंधनधान्यादिसमृद्धंकुरुसर्वदा ॥इति॥ ततोमृत्पेटिकांगर्तेस्थापयित्वा॥ सशैलसागरांपृथ्वीं यथावहसिमूर्धनि ॥ तथामांवहकल्याणसंपत्संततिभिः सह॥ इतिसंप्रार्थ्य तथैवमृदागर्तंपूरये त् ॥ मृदआधिक्येऽधिकंफलम् साम्येसमम् न्यूनत्वेन्यूनम्॥गर्तोपरि गोमयेनोपलिप्य गंधपु ष्पाक्षतादिनिक्षिपेत् ॥ततः॥ आचार्यंब्रह्माणंऋत्विजश्चसंपूज्यतेभ्योदक्षिणांदत्वा ग्रहपीठदेव तावास्तुपीठदेवताश्चसंपूज्य उत्तिष्ठब्रह्मणस्पते० अभ्यारमिदद्रयो० यांतुदेवगणाः० इतिविसृ ज्य ग्रहपीठवास्तुपीठाद्याचार्यायदद्यात् ॥ ततः आचार्यः प्रणीताविमोकादिशेषंकर्मसमाप्या ग्निंविसर्जयेत् ॥ ततो यजमानोब्रह्मशिरुयाद्युद्देशेनशतंशक्त्यावाब्राह्मणान्भोजयिष्ये इतिसं कल्प्यविप्रान्संपूज्यभूयसींदत्वा प्रमादात्कुर्वतांकर्म० यस्यस्मृत्येतिचोक्त्वा कर्मेश्व रार्पणंकृत्वाब्राह्मणान्भोजयित्वा तेभ्यः शिवंवास्त्वितित्रिरुक्त्वाशिवंवास्तुइतिविप्रास्त्रिब्रू युः ॥ ततोयथासुखंसुहृद्युतोभुंजीतेति ॥ एवंविधिनाप्रतिसंवत्सरंवास्तुपूजनंकार्य म् ॥ तेनगृहसंबंधिदुःखंनाप्नुयादित्युक्तं दानविवेके ॥ महादेवतनूजेनश्रीदिवा करसूरिणा ॥ रचितावास्तुशांतिस्तुपद्धतिर्बुधतोषदा ॥ इति पौराणवास्तुशांतिप्रयोगः ॥ इदानींसूत्रोक्ताशांतिरभिधीयते ॥ साचद्विजातीनांपूर्वोक्तयासमुच्चीयते ॥ पूर्वोक्तायांत्वश

क्षिणांदत्वा वाद्यादितूर्यघोषपूर्वकमाचार्यऋत्विग्भिः सहसकुटुंबोयजमानः रक्षोघ्नपावमानमंत्रै
गृंहंत्रिसूत्र्यावेष्टयित्वा समंताद्व्रीहियवमतीभिरद्भिर्हिरण्यमवधाय शंतातीयेनशंनइंद्राग्नीतिपं
चदशऋग्भिरितिनारायणवृत्तिः ॥ शंतातीयेन ईळेद्यावापृथिवीइतिपंचविंशतिऋग्भिः
समुच्चये इतिवेत्यन्ये ॥ तेननवाशंकानचोत्तरं ॥ त्रिः प्रदक्षिणंपरिव्रजन्प्रोक्षरयाविच्छि
न्नयाचोदकधारयापोहिष्ठामयोभुवइतितृचेन ॥ ततोविच्छिन्नक्षीरधारांचपरितोदत्वा वास्तु
पीठमध्यनवपदेसुरूपांपृथ्वींध्यात्वा पृथिव्यैनमः इतिसंपूज्य सर्वदेवमयंवास्तु सर्वदेवमयंपर
म् ॥ इतिपठित्वा ततोगृहस्याग्नेयकोणेआकाशपदे यजमानपदेनजानुमात्रंगर्तंखात्वा मध्ये
गोमयेनोपलिप्य शुभ्रचंदनपुष्पाक्षतैरलंकृत्य सर्वधान्यबीजानिदध्योदनंचक्षिप्त्वा नवजलपूर्णं
कलशंशतैकपुष्पयुतंगंधाद्यर्चितमादाय जानुभ्यामवनिंगत्वा तज्जलंगर्ते ॐनमोवरुणाये
तिमंत्रेणक्षिपेत् ॥ जलेप्रदक्षिणावर्तेपुष्पेचोर्ध्वमुखेशुभम् ॥ ततोऽपक्वमृत्पेटिकायांशाल्यादि
सप्तधान्यबीजानिदध्योदनंशैवालंफलपुष्पाणिचक्षिप्त्वा तूर्यघोषेणपूर्वस्थापितवृषवास्तुप्रति
मामानीय पेटिकायांसंस्थाप्य पेटिकांपिधाय पठेत्॥ पूजितोसिमयावास्तोहोमाद्यैरर्चनैः शु
भैः ॥ प्रसीदपाहिविश्वेशदेहिमेगृहजंसुखम् ॥ वास्तुमूर्तेनमस्तेस्तुभूशय्याभिरतप्रभो ॥ म

गृहंधनधान्यादिसमृद्धंकुरुसर्वदा ॥इति॥ ततोमृत्पेटिकांगर्तेस्थापयित्वा॥ सशैलसागरांपृथ्वीं
यथावहसिमूर्धनि ॥ तथामांवहकल्याणसंपत्संततिभिः सह॥ इतिसंप्रार्थ्य तथैवमृदागर्तंपूरये
त् ॥ मृदआधिक्येऽधिकंफलम् साम्येसमम् न्यूनत्वेन्यूनम्॥गर्तोपरि,गोमयेनोपलिप्य गंधपु
ष्पाक्षतादिनिक्षिपेत् ॥ततः॥ आचार्यब्रह्माणंऋत्विजश्चसंपूज्यतेभ्योदक्षिणांदत्वा ग्रहपीठदेव
तावास्तुपीठदेवताश्चसंपूज्य उत्तिष्ठब्रह्मणस्पते० अभ्यारमिदद्रयो० यांतुदेवगणाः० इतिविसृ
ज्य ग्रहपीठवास्तुपीठाद्याचार्यायदद्यात् ॥ ततः आचार्यः प्रणीताविमोकादिशेषंकर्मसमाप्या
ग्निंविसर्जयेत् ॥ ततो यजमानोब्रह्मशिरूयाद्युद्देशेनशतंशक्त्यावाब्राह्मणान्भोजयिष्ये इतिसं
कल्प्यविप्रान्संपूज्यभूयसींदत्वा प्रमादात्कुर्वतांकर्म० यस्यस्मृत्येतिचोक्त्वा कर्मेश्व
रार्पणंकृत्वाब्राह्मणान्भोजयित्वा तेभ्यः शिवंवास्त्वितित्रिरुक्त्वाशिवंवास्तुइतिविप्रास्त्रिर्ब्रू
युः ॥ ततोयथासुखंसुहृद्युतोभुंजीतेति ॥ एवंविधिनाप्रतिसंवत्सरंवास्तुपूजनंकार्य
म् ॥ तेनगृहसंबंधिदुःखंनाप्नुयादित्युक्तं दानविवेके ॥ महादेवतनूजेनश्रीदिवा
करसूरिणा ॥ रचितावास्तुशांतेस्तुपद्धतिर्बुधतोषदा ॥ इति पौराणवास्तुशांतिप्रयोगः ॥
इदानींसूत्रोक्ताशांतिरभिधीयते ॥ साचद्विजातीनांपूर्वोक्तयासमुच्चीयते ॥ पूर्वोक्तायांत्वश

क्षिणांदत्वा वाद्यादितूर्यघोषपूर्वकमाचार्यऋत्विग्भिः सहसकुटुंबोयजमानः रक्षोघ्नपावमानमंत्रै र्गृहंत्रिसूत्र्यावेष्टयित्वा समंताद्व्रीहियवमतीभिरद्भिर्हिरण्यमवधाय शंतातीयेनशंनइंद्राग्नीतिपं चदशऋग्भिरितिनारायणवृत्तिः ॥ शंतातीयेन इंळेद्यावापृथिवीइतिपंचविंशतिऋग्भिः समुच्चये इतिवेत्यन्ये ॥ तेननवाशंकानचोत्तरं ॥ त्रिः प्रदक्षिणंपरिव्रजन्प्रोक्षत्यविच्छि न्नयाचोदकधारयापोहिष्ठामयोभुवइतितृचेन ॥ ततोविच्छिन्नक्षीरधारांचपरितोदत्वा वास्तु पीठमध्यनवपदेसुरूपांपृथ्वींध्यात्वा पृथिव्यैनमः इतिसंपूज्य सर्वदेवमयंवास्तु सर्वदेवमयंपर म् ॥ इतिपठित्वा ततोगृहस्याग्नेयकोणेआकाशपदे यजमानपदेनजानुमात्रंगर्तंखात्वा मध्ये गोमयेनोपलिप्य शुभ्रचंदनपुष्पाक्षतैरलंकृत्य सर्वधान्यबीजानिदध्योदनंचक्षिप्त्वा नवजलपूर्ण कलशंशैवलपुष्पयुतंगंधाद्यर्चितमादाय जानुभ्यामवनिंगत्वा तज्जलंगर्ते ॐनमोवरुणाये तिमंत्रेणक्षिपेत् ॥ जलेप्रदक्षिणावर्तैपुष्पेचोर्ध्वमुखेशुभम् ॥ ततोऽपक्वमृत्पेटिकायांशाल्यादि सप्तधान्यबीजानिदध्योदनंशैवालंफलपुष्पाणिचक्षिप्त्वा तूर्यघोषेणपूर्वस्थापितवृषवास्तुप्रति मामानीय पेटिकायांसंस्थाप्य पेटिकांपिधाय पठेत्॥ पूजितोसिमयावास्तोहोमाद्यैरर्चनैः शु भैः ॥ प्रसीदपाहिविश्वेशदेहिमेगृहजंसुखम् ॥ वास्तुमूर्तेनमस्तेस्तुभूशय्याभिरतप्रभो ॥ म

इति । ततस्तज्जलंपात्रांतरेआदाय तस्मिन्दूर्वाशमीशाखाउदुम्बरशाखाव्रीहियवान्फलंहिरण्यं चाक्षिप्त्वा दूर्वाभिः शाखाभ्यांचसर्वंगृहंप्रागादितः प्रदक्षिणंपरिव्रजन्प्रोक्षेदनेनसूक्तेन । शंनइं द्राग्नीतिपंचदशर्चस्यसूक्तस्य वसिष्ठोविश्वेदेवास्त्रिष्टुप् गृहप्रोक्षणेवि० ॥ ॐ शंनइंद्राग्नी० स कृत्सूक्तपाठः ॥ इतिनारायणवृत्त्यनुरोधात् ॥ वस्तुतस्तु शंतातीयेनेति ईळेद्यावेतिवर्गपंच केरित्यन्ये॥एवंसतिसमुच्चये नकोपिविरोधः॥तद्यथा। ईळेद्यावेतिपंचविंशर्चस्यसूक्तस्यास्तसुत आङ्गीनमाद्योपाद्रौलिंगोक्तदेवताजगत्योंत्ये त्रिष्टुभौ गृहप्रोक्षणेविनि० ॐईळेद्यावापृथि वी० वर्गाः ॥ ५ ॥ अत्रापिसकृदेवसूक्तपाठः ॥ ततःप्रागादितस्त्रिरविच्छिन्नामुदकधारांदद्या दनेन आपोहिष्ठेतितृचस्यांबरीषः सिंधुद्वीपआपोगायत्रीगृहस्यसमंताद्धारायांविनि० ॐआ पोहिष्ठामयोभुवः० ॥ ३ ॥ अत्रापिसकृदेवमंत्रपाठः ॥ ततोवास्तुपीठान्नैर्ऋत्यांपश्चिमायां वाकुंडेस्थंडिलेवा गृह्याग्निंवरदनामकंसंस्थाप्य चत्वारिश्रृंगेतिध्यात्वाऽस्मिन्वास्तोष्पति स्थालीपाकेअन्वाधानंकरिष्ये ॥ अस्मिन्नन्वाहितेग्नावित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वाअत्र प्रधानं वास्तोष्पतिं चतुर्वारंचरुणा शेषेणस्विष्टकृतमित्यादिसद्योयक्ष्येइत्यंतमुक्त्वान्वाधा यइध्माबर्हिषीसन्नह्यपरिसमूहनादिपूर्णपात्रनिधानांतंकृत्वा वास्तोष्पतयेचतुःकृत्वातूष्णीनि

क्तौस्वगृह्योक्तैवकर्तव्या तथापिसिद्धेः ॥ बह्वल्पंवास्वगृह्योक्तंयस्यकर्मप्रकीर्तितम् ॥ तस्य
तावतिशास्त्रार्थेकृतेसर्वंकृतंभवेत् । इति वचनात् ॥ येषांगृह्यंनास्तितेषांशूद्राणांचपूर्वोक्तैव॥
तस्याःसर्वसाधारण्येनविधानात् ॥ अतश्चनशूद्रमात्रविषयत्वम् । तस्मात्गृह्योक्तापूर्वयासमु
च्चीयतेसांप्रदायिकैः ॥ अथाश्वलायनगृह्योक्तवास्तुशांतिप्रयोगः ॥ तद्यथा ॥ काष्ठादिनि
र्मितंसंपन्नंधान्यादिसर्वोपस्करयुतंशोभनेमुहूर्तेब्राह्मणैः सह तूर्यघोषेणगृहंप्रविश्यअगारमध्ये
प्राङ्मुखउपविश्यदर्भेषुदर्भान्धारयमाणः पत्न्यासहआचम्य प्राणानायम्य देशकालौसं
कीर्त्य ममास्यवास्तोः शुभतासिद्ध्यर्थं वास्तुशांतिंकरिष्ये इतिसंकल्प्य तदंगत्वेनगण
पतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकृत्वा पूर्वोक्तवास्तुपीठदेवतास्थापनार्च
नहोमबलिदानादित्रिसूत्र्यागृहवेष्टनाभिषेचनब्राह्मणभोजनसंकल्पांतंकृत्वा आश्वलायनगृह्यो
क्तांवास्तुशांतिंकुर्यात् ॥ शुचिदेशेचतस्रः शिलाः संस्थाप्य तासु दूर्वांनिधाय तत्रमणि
कसंज्ञंमृद्भांडंसंस्थाप्य एतैर्मंत्रैः पृथिव्याअधिसंभवेति अरंगरोवावदीति त्रेधाबद्धोवरत्रया ।
इरामुहप्रशंसति अनिरामपबाधतामितिवा ॥ ततोमणिकेजलमासिंचेदनेनमंत्रेण । एतुराजा
वरुणोरेवतीभिरस्मिन्स्थानेतिष्ठतुमोदमानः ॥ इरांवहंतोघृतमुक्षमाणामित्रेणसाकंसहसंविशंतु

इति । ततस्तज्जलंपात्रांतरेआदाय तस्मिन्दूर्वाशमीशाखाउदुम्बरशाखाव्रीहियवान्फलंहिरण्यं चक्षिप्त्वा दूर्वाभिः शाखाभ्यांचसर्वंगृहंप्रागादितः प्रदक्षिणंपरिव्रजन्प्रोक्षेदनेनसूक्तेन । शंनइंद्राग्नीतिपंचदशर्चस्यसूक्तस्य वसिष्ठोविश्वेदेवास्त्रिष्टुप् गृहप्रोक्षणेवि० ॥ ॐ शंनइंद्राग्नी० सकृत्सूक्तपाठः ॥ इतिनारायणवृत्त्यनुरोधात् ॥ वस्तुतस्तु शंतातीयेनेति ईळेद्यावेतिवर्गपंचकैरित्यन्ये॥एवंसतिसमुच्चये नकोपिविरोधः॥तद्यथा॥ ईळेद्यावेतिपंचविंशर्चस्यसूक्तस्यात्समुतआश्वीनमाद्योपादौलिंगोक्तदेवताजगत्यौत्ये त्रिष्टुभौ गृहप्रोक्षणेविनि० ॐईळेद्यावापृथिवी० वर्गाः ॥ ५ ॥ अत्रापिसकृदेवसूक्तपाठः ॥ ततःप्रागादितस्त्रिरविच्छिन्नामुदकधारांदद्यादनेन आपोहिष्ठेतितृचस्यांबरीषः सिंधुद्वीपआपोगायत्रीगृहस्यसमंताद्धारायांविनि० ॐआपोहिष्ठामयोभुवः० ॥ ३ ॥ अत्रापिसकृदेवमंत्रपाठः ॥ ततोवास्तुपीठान्नैर्ऋत्यांपश्चिमायांवाकुंडेस्थंडिलेवा गृह्याग्निंवरदनामकंसंस्थाप्य चत्वारिशृंगेतिध्यात्वाऽस्मिन्वास्तोष्पतिस्थालीपाकेअन्वाधानंकरिष्ये ॥ अस्मिन्नन्वाहितेग्नावित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वाअत्रप्रधानं वास्तोष्पतिं चतुर्वारंचरुणा शेषेणस्विष्टकृतमित्यादिसद्योयक्ष्येइत्यंतमुक्त्वान्वाधायइध्माबर्हिषीसन्नह्यपरिसमूहनादिपूर्णपात्रनिधानांतंकृत्वा वास्तोष्पतयेचतुःकृत्वातूष्णींनि

ह्रूप्य तत्संख्ययातथैवप्रोक्ष्यअवघाताद्याज्यभागांतंकृत्वाअवदानधर्मेणचरुमवदायवास्तोष्प
तइतिचतसृणांवसिष्ठोवास्तोष्पतिस्त्रिष्टुप्अंत्यागायत्रीवास्तोष्पतिप्रधानचरुहोमेवि० ॐवा
स्तोष्पतेप्रतिजा० ष्पदेस्वा० ॥ अत्रऋगंतेस्वाहाकारंपठन्जुहुयात् नस्वाहाकारांतेहोमः॥गृ
ह्येतु प्रत्यृचंहुत्वेत्युक्तेः ॥ एवंसर्वत्र वास्तोष्पतयइदंनमम ॥ पुनश्चरुमवदाय ॐवास्तोष्पतेप्र
तरणोन० वास्तोष्पतयइदं० ॥२॥ ॐवास्तोष्पतेशग्मया०वास्तोष्पतयइदं०॥३॥ ॐअमी
वहावास्तोष्पते० वास्तोष्पतयइ० ॥ ४ ॥ सर्वत्रत्यागः ॥ ततःस्विष्टकृदादिहोमशेषंसमाप्य
शिष्टेनचरुणान्येनस्वादुव्यंजनपायसादियुतेन शतंतदर्धंवाशक्त्यावा ब्राह्मणान्भोजयेत् ॥
होमात्पूर्वमन्यः पाकोनकार्यः॥ततः शिवंवास्तुशिवंवास्तुशिवंवास्त्वितित्रिः प्रत्युक्तः सुहृद्यु
तोभुंजीतेति ॥ विशीर्णगृहसज्जीकरणेपीष्यतेवास्तोष्पतिस्थालीपाकः॥साधारणशांतिवत्॥
इत्याश्वलायनगृह्योक्तवास्तुशांतिः ॥ ॥ अथगृहदानप्रयोगः ॥ यजमानः कृतनित्यक्रियःपु
ण्यकालेगृहमध्येदक्षिणभागेचंदनेनाष्टदलंपद्मंविलिख्य तदुपरिप्रस्थमात्रंतिलान्निक्षिप्य तदुप
रिशय्यांसोपस्करांस्थापयित्वा शय्योपरिसौवर्णमयींलक्ष्मीनारायणप्रतिमांअग्न्युत्तारणपूर्व
कंपंचामृतादिनाअभिषिच्य संपूज्य प्रतिग्रहीतारंचसपत्नीकंवृत्वा तंकरेगृहीत्वा मंगलतूर्य

घोषेणमंत्रैर्गृहंप्रवेशयेत् ॥ तेचमंत्राः ॥ एह्येहिनारायणदिव्यरूपसर्वामरैर्वंदितपादपद्म ॥ शु
भाशुभानंदशुचामधीशलक्ष्मीयुतस्त्वंचगृहंगृहाण ॥ नमः कौस्तुभनाथायहिरण्यकवचाय
च ॥ क्षीरोदार्णवसुप्तायजगद्धात्रेनमोस्तुते ॥ नमोहिरण्यगर्भायविश्वगर्भायवैनमः ॥ चराच
रस्यजगतोगृहभूतायवैनमः ॥ भूर्लोकप्रमुखालोकास्तवदेहेव्यवस्थिताः ॥ नंदंतियावत्कल्पां
तंतथास्मिन्भवनेगृही ॥ त्वत्प्रसादेनदेवेशपुत्रपौत्रावृतोगृहे॥पंचयज्ञक्रियायुक्तोवसेदाचंद्रतार
कम् ॥ इति ॥ ततस्तंपूर्वस्थापितशय्यायामुदङ्मुखमुपवेश्य सपत्नीकंयथाविभवंवस्त्राल
ंकारादिभिः संपूज्य स्वयमासनेप्राङ्मुखोदर्भेष्वासीनोदर्भान्धारयमाणः पत्न्यासहप्राणानाय
म्य देशकालौसंकीर्त्य ममसमस्तपापक्षयपूर्वककल्पकोटिशतावधिब्रह्मलोकमहीयमानका
मः शिलाकाष्ठपक्वेष्टिकादिनिर्मितंयथोपपत्तिसंपादितं ताम्रादिभाजनसर्वधान्यलवणघृततै
लगुडशर्करागोमहिषीवलीवर्ददासदासीमंचकतूलिकाद्वयवितानादर्शतांबूलायतनैलालवंगा
दिवर्षपर्याप्तसर्वोपकरणान्वितं सदीपिकाप्रद्योतितं विश्वकर्मदैवतंशक्रदैवतंवेदंगृहं गोत्रायश
र्मणेअमुकशाखाध्यायिनेसपत्नीकायसालंकृतायसुपूजितायलक्ष्मीनारायणप्रतिमासहितं तु
भ्यमहंसंप्रददे नममेतिदत्वा पठेत् ॥ मंत्रोतु ॥ इदंगृहंगृहाणत्वंसर्वोपस्करसंयुतम् ॥ तवविप्र

प्रसादेनममसंतुमनोरथाः ॥ गृहंममविभूत्यर्थंगृहाणत्वंद्विजोत्तम ॥ प्रीयतांमेजगद्योनिर्वास्तु
रूपीजनार्दनः ॥ ततः प्रतिग्रहीतागृहमध्यस्तंभंबहिर्द्वारदेहलींवासंस्पृश्यदेवस्यत्वेतियजुषा
प्रतिगृह्यस्वस्तीत्युक्त्वायथाशाखंकामस्तुतिंपठेत् ॥ ततः सुवर्णसहस्रमारभ्यएकसुवर्णपर्यं
तंयथाशक्त्यावित्तशाठ्यविवर्जितांदक्षिणांदद्यात् ॥ ततः पादुकोपानच्छत्रचामरादिकंदत्वा
संपन्नंगृहोपस्करादीत्युक्त्वा सर्वंसुसंपन्नंसंपूर्णमेवास्त्वितिप्रतिवचनंदद्यात् ॥ ततोब्राह्मणान्सं
पूज्यभूयसींदक्षिणांदत्वाशिषोगृह्णीयात् ॥ प्रमादात्कुर्वतां० यस्यस्मृत्येतिकर्मेश्वरार्पणं
कुर्यात् ॥ गृहदानफलमुक्तं मात्स्ये ॥ यएवंसर्वसंपन्नंपक्केष्टंविनिवेदयेत् ॥ कल्पकोटिशतं
यावद्ब्रह्मलोकेमहीयते ॥ शैलजंदारुजंवापियोदद्याद्विधिपूर्वकम् ॥ वसेत्क्षीरार्णवेरम्येनारा
यणसमीपतः ॥ मृन्मयंवापियोदद्याद्गृहंसूपस्करान्वितम् ॥ पुरेषुलोकपालानांप्रतिमन्वंत
रंवसेत् इति ॥ अत्रप्रविश्यसंस्पृश्यवाप्रतिगृह्णीयादित्युक्तेः प्रविश्यगृहद्वारदेहलींदेहल्यांप्र
तिग्रहःकर्तव्यः ॥ तथैव संस्पृश्यस्थूणांद्वारदेहलींवासंस्पृश्यप्रतिगृह्णीयादितिसांप्रदायिकाः
इतिगृहदानप्रयोगः॥अथमठदानं स्कांदे॥ कृत्वामठंप्रयत्नेनशयनासनसंयुतम् ॥ तृणैराच्छा
दितंचैववेदिकाभिः सुशोभितम् ॥ पुण्यकालेद्विजेभ्योथयतिभ्योवानिवेदयेत् ॥ सर्वान्कामा

नवाप्नोतिनिष्कामोमोक्षमाप्नुयात् ॥ इति ॥ इतिमठदानम् ॥ अथधर्मशालादानम् ॥ मार्कं
डेयपुराणे कुर्यात्प्रतिश्रयगृहंपथिकानांहितावहम् ॥ निजगेहैकदेशंवासाधूनांयोनिवेदयेत् ॥
प्रतिश्रयोधर्मशाला ॥तथाअक्षय्यपुण्यमुद्दिष्टंतस्यस्वर्गापवर्गदम्॥सर्वकामसमृद्धोऽसौदेववद्दि
विमोदते ॥ भविष्ये प्रतिश्रयेसुविस्तीर्णेकारितेसजलेंधने ॥ दीनानाथजलार्थायवदाकिंन
कृतंभवेत्इति ॥ इतिधर्मशालादानम् ॥ अथकन्यादानम् ॥ हेमाद्रौ सहस्रमेवधेनूनांशतंवा
नडुहांसमम् ॥ दशानडुत्समंयानंदशयानसमोहयः ॥ दशवाजिसमाकन्याभूमिदानंचतत्सम
म् ॥ तस्मात्सर्वेषुदानेषुकन्यादानंविशिष्यते इति ॥ अग्निपुराणे श्रुत्वाकन्याप्रदानंचपितर
श्चपितामहाः ॥ विमुक्ताः सर्वपापेभ्योब्रह्मलोकंव्रजंतिते इति ॥ देवलः । तिस्रःकन्यायथान्या
यंपालयित्वानिवेद्यच ॥ नपितानरकंयातिनारीवास्त्रीप्रसूयिनी इति ॥ वसिष्ठः । हाटकक्षिति
गौरीणांसप्तजन्मानुगंफलम् ॥ धर्मेणविधिनादातुमसगोत्रेणयुज्यते इति ॥ ऋष्यशृंगः ॥वरगो
त्रंसमुच्चार्यप्रपितामहपूर्वकम्॥नामसंकीर्तयेद्विद्वान्कन्यायाश्चैवमेवहि ॥ तिष्ठेदुदङ्मुखोदाता
तिष्ठेत्पूर्वमुखोवरः ॥ मधुपर्कार्चितायैनांतस्मैदद्यात्सदक्षिणाम् ॥ उदपात्रंतदादायमंत्रेणानेन
दापयेत् इति॥तिष्ठेदिति अनुपविष्टइत्यर्थः ॥गौरींकन्यामिमामित्यादिपुत्रपौत्रप्रवर्धिनीमित्यं

तंप्रयोगंवक्ष्यामः ॥ भूमिंधेनूश्चदासींश्चवासांसिचस्वशक्तितः ॥ महिषींवाजिनश्चैवदद्यात्स्व
र्णमणीनपि इति ॥ ततः स्वगृह्यविधिनाहोमाद्यंकर्मकारयेत् ॥ यथाचारंविधेयानिमांगल्य
कुतुकानिच इति ॥ अथकन्यादानप्रयोगः ॥ तत्रादौयथाशास्त्रंमधुपर्केणसंपूज्य वरंप्राङ्मु
खंप्रत्यङ्मुखोसुपवेश्य पित्रादिकोवधूवरदक्षिणतःस्वदक्षिणस्थपत्नीसहितउदङ्मुखो
दर्भेष्वासीनोदर्भान्धारयमाणोदेशकालौसंकीर्त्य मम समस्तपितॄणांनिरतिशयसानंदब्रह्मलो
कावाप्त्यादिकन्यादानकल्पोक्तफलावाप्तये अनेनवरेणास्यांकन्यायामुत्पादयिष्यमाणसंत
त्याद्वादशावरान् द्वादशपरान्पुरुषान्पवित्रीकर्तुं आत्मनश्चलक्ष्मीनारायणप्रीतये ब्राह्मविवाह
विधिनाकन्यादानमहंकरिष्ये ॥ इतिसकुशाक्षतजलेनसंकल्प्य सपत्नीकउत्थायोदङ्मुख
एवकन्यांसंगृह्यपठेत् ॥ कन्यांकनकसंपन्नांकनकाभरणैर्युताम् ॥ दास्यामिविष्णवेतुभ्यं
ब्रह्मलोकजिगीषया ॥ विश्वंभरः सर्वभूताः साक्षिण्यःसर्वदेवताः ॥ इमांकन्यांप्रदास्यामिपि
तॄणांतारणायच ॥ इतिमंत्रोपठित्वा स्वदक्षिणस्थभार्यादत्तपूर्वकल्पितजलधारामविच्छिन्नां
नवकांस्यपात्रोपरिधृतकन्यांजल्युपरिस्थवरांजलिंदक्षिणहस्तेक्षिपन्वदेत् ॥ कन्यातारयतु ।
पुण्यंवर्धताम् । शिवाआपःसंतु । सौमनस्यमस्तु । अक्षतंचारिष्टं चास्तु । दीर्घमायुः श्रेयः

शांतिः पुष्टिस्तुष्टिश्चास्तु । यच्छ्रेयस्तदस्तु । यत्पापंतत्प्रातिहतमस्तु ॥ पुण्याहंभवंतो
ब्रुवंतु । स्वस्तिभवंतोब्रुवंतु । ऋद्धिंभवंतोब्रुवंतु । श्रीरस्त्वितिभवंतोब्रुवंतु ॥ अस्तुश्रीरि
तिप्रतिवचनंसर्वत्रज्ञेयम् ॥ अमुकामुकप्रवरोपेतामुकगोत्रोत्पन्नोमुकशर्माहं ममसमस्तपितॄ
णामित्यादि श्रीलक्ष्मीनारायणप्रीतयेइत्यंतं पूर्वोक्तमुक्त्वा अमुकप्रवरोपेतायामुकगोत्राया
मुकप्रपौत्रायामुकपौत्रायामुकपुत्रायामुकशर्मणेवरायश्रीधररूपिणेकन्यार्थिने अमुकामुक
प्रवरोपेतामुकगोत्राममुकप्रपौत्रीममुकपौत्रीममुकस्यममपुत्रीममुकदेवीनाम्नींकन्यांश्रीरूपिणीं
वरार्थिनीं यथाशक्त्यलंकृतां प्रजापतिदैवत्यां धर्मप्रजासहत्वकर्मभ्यस्तुभ्यमहंसंप्रददेक
न्यांप्रतिगृह्णातुभवानितिवरहस्तेसकुशाक्षतजलंक्षिपेत् ॥ प्रजापतिः प्रीयताम् इतिमनसास्म
रेत् ॥ नममेतिनवदेदितिकेचित् ॥ ततोदाता । गौरींकन्यामिमांविप्रयथाशक्तिविभूषिताम् ॥
गोत्रायशर्मणेतुभ्यंदत्तांविप्रसमाश्रय ॥ कन्येममाग्रतोभूयाःकन्येमेदेविपार्श्वयोः ॥कन्येमेपृष्ठ
तोभूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥ ममवंशकुलेजातापालितावत्सराष्टकम् ॥ तुभ्यंविप्रमयाद
त्तापुत्रपौत्रप्रवर्धिनी॥धर्मेच अर्थेच कामेच नातिचरितव्यात्वयेयम् ॥ नातिचरामीतिवरः ॥ ए
वंसमस्तेत्यादिनातिचरामीत्यंतंकन्यादानंत्रिवारंकार्यमितिशौनकः ॥ ततोवरः । देवस्यत्वा०

भ्यांप्रतिगृह्णामि ॥ ॐ स्वस्तीत्युक्त्वाकन्यायादक्षिणांसमभिमृश्य ॥ कइदंकस्माअदादितिय
थाशाखंकामस्तुतिं पठित्वापृथ्वीप्रतिगृह्णात्विति जपित्वा गृहस्थाश्रमांतर्गतश्रौतस्मार्तकर्मा
नुष्ठानसिद्ध्येधर्मप्रजासहत्वकर्मसिद्ध्यर्थंच कन्यांप्रतिगृह्णामीतिवदेत्॥ततोदातादेशकालौसं
कीर्त्यंकृतस्यकन्यादानकर्मणः सांगतासिद्ध्यर्थंइदंसुवर्णंअग्निदैवतंदक्षिणात्वेनतुभ्यमहंसंप्रददे
नममेतिवरहस्तेदद्यात् ॥ ॐ स्वस्तीतिवरः ॥ ततोदाता एवमेवजलपात्रभोजनभाजनानि
गोमहिष्यश्वगजदासीदासभूवाहनालंकारादियथाविभवंसंकल्प्य दद्यात् ॥ ततोब्राह्मणभोज
नंसंकल्प्य भूयसींचदद्यात् ॥ कर्मेश्वरार्पणंकुर्यात् ॥ अन्यदपियथाचारंकार्यं ॥ विस्तरस्तुप्र
योगरत्नादौज्ञेयः ॥ कन्यागृहेभोजननिषेधोमदनरत्नेवह्निपुराणे॥अप्रजायांतुकन्यायांनभुंजी
तकदाचन ॥ दौहित्रस्यमुखंदृष्ट्वाकिमर्थमनुशोचति ॥ इतिकन्यादानप्रयोगः ॥ अथकपिला
दानम् ॥ साचदशधोक्तावाराहे ॥ सुवर्णकपिलापूर्वाद्वितीयागौरपिंगला ॥ तृतीयाचैवरक्ताक्षी
चतुर्थीगुडपिंगला ॥ पंचमीवहुवर्णास्यात्षष्ठीचश्वेतपिंगला ॥ सप्तमीश्वेतपिंगाक्षीअष्टमीकृ
ष्णपिंगला ॥ नवमीपाटलाप्रोक्तादशमीपुच्छपिंगला ॥ एतादशविधाः ख्याताः कपिलास्ते
महामुने॥सर्वाह्येतामहाभागास्तारयंतिनसंशयइति।आदित्यपुराणे।सहस्रंयोगवांदद्यात्कपिलां

त्वेकदैवहि॥सममेवपुराप्राहब्रह्माब्रह्मविदांवरःइति॥तथा। स्वर्णशृंग्योरौप्यखुराःसवत्सायाभ
वंतिहि॥ सुरभीलोकमासाद्यरमतेतावतीः समाः इति॥ महाभारते ॥ समानवत्सांकपिलां
धेनुंदद्यात्पयस्विनीम् ॥ सुश्वेतवस्त्रसंवीतांब्रह्मलोकेमहीयते इति ॥ अथकपिलादानप्रयो
गः॥ पुण्यकालेकृतनित्यक्रियः अद्येत्यादि॰ ममगोसहस्रदानफलावाप्तयेसवत्सकपिलायाः
रोमपरिमितवत्सरपर्यंतं कामधेनुलोकनिवाससिद्ध्येच इमांसवत्सांकपिलांसुवर्णशृंगींरौप्यखु
रांताम्रपृष्ठींकांस्योपदोहांघंटाभरणांश्वेतवस्त्रयुगच्छन्नां चंदनस्रग्विभूषितां सोपस्करां रुद्रदे
वत्यां गोत्रायशर्मणेसुपूजितायब्राह्मणायतुभ्यमहंसंप्रददे नममेतिदद्यात् ॥ मंत्रस्तु मात्स्ये ॥
कपिलेसर्वदेवानांपूजनीयासिरोहिणी॥ तीर्थदेवमयीयस्मादतः शांतिंप्रयच्छमे इतिमंत्रांतेप्र
दक्षिणांकुर्यात्॥ ततः सुवर्णदक्षिणांदद्यात्॥ उक्तोपस्करकपिलादानफलं मात्स्ये॥ वस्त्रंच
तुर्गुणंदत्वादक्षिणांचचतुर्गुणाम्॥ एतैरलंकृतांधेनुंघंटाभरणभूषिताम् ॥ कपिलांविप्रमुख्या
यदत्त्वामोक्षमवाप्नुयात् ॥ इति॥ तथा॥ द्विगुणोपस्करोपेतामहतीकपिलास्मृता ॥ उप
स्कराः सुवर्णशृंगवस्त्रदोहनपात्राद्याः सामान्यगोदानेवक्ष्यमाणाः॥ दत्तासाविप्रमुख्यायस्वर्ग
मोक्षफलप्रदा॥ सप्तजन्मकृतात्पापान्मुच्यतेनात्रसंशयः॥यान्यानर्थयतेकामांस्तांस्तान्प्राप्नो

तिमानवं इति ॥ महाकपिलादानप्रयोगस्तु अद्येत्यादि ममसमस्तजन्मकृतपापनाशपूर्वकं
महाकपिलादानकल्पोक्तफलावाप्त्यर्थं पुत्रपौत्रादिसहितायशर्मणे सालंकृतां इमांमहाकपिलां
द्विगुणोपस्करोपेतांरुद्रदैवत्यां तुभ्यमहंसंप्रददे नममेतिदद्यात् ॥ ततः सुवर्णदक्षिणांदत्वास
मापयेत् ॥ मंत्रस्तु पूर्वमेवोक्तः ॥ ॥ इतिमहाकपिलादानप्रयोगः ॥ ॥ इतिमहादशदा
नानि ॥ ॥ अथदशधेनुदानानि ॥ यास्तुपापविनाशिन्यः कथितादशधेनवः ॥ तासांस्व
रूपंवक्ष्यामिनामानिचनराधिप ॥ प्रथमागुडधेनुः स्याद्घृतधेनुस्तथापरा ॥ तिलधेनुस्तृ
तीयातुचतुर्थीजलधेनुका ॥ क्षीरधेनुस्तुविख्यातामधुधेनुस्तथापरा ॥ सप्तमीशर्करा
धेनुर्दधिधेनुस्तथाष्टमी ॥ रसधेनुस्तुनवमीदशमीस्यात्स्वरूपतः ॥ कुंभान्घृतादिधा
तूनामितरासांतुराशयः ॥ सुवर्णधेनुमप्यत्रकेचिदिच्छंतिमानवाः ॥ नवमींतिलतैलेनतथान्ये
पिमहर्षयः ॥ रसधेनुस्थानेसुवर्णधेनुंजलधेनुवत्पूजयेत् ॥ एतद्विधानमपिमात्स्ये ॥ अजिनं
तुचतुर्हस्तंप्राग्ग्रीवंविन्यसेद्भुवि ॥ गोमयेनोपलितायांदर्भानास्तीर्यसर्वतः ॥ तत्रैणंवाजिनंतद्व
द्वत्सस्यपरिकल्पयेत् ॥ लघुकृष्णाजिनम् ॥ प्राङ्मुखींकल्पयेद्धेनुमुदक्पादांसवत्सकाम् ॥
प्राङ्मुखींप्राक्शिरसम् ॥ सवत्सांउत्तरभागस्थितवत्ससहिताम् ॥ उत्तमागुडधेनुः स्यात्सदा

भारचतुष्टया ॥ वत्संभारेणकुर्वीतभाराभ्यांमध्यमास्मृता ॥ अर्धभारेणवत्सः स्यात्कनिष्ठा
भारकेणतु ॥ चतुर्थांशेनवत्सःस्याद्गृहवित्तानुसारतः ॥ तुलापलशतंप्राहुर्भारः स्याद्विंशति
स्तुलाः इति ॥ भारः पलसहस्रात्मकोभवतीत्युक्तंपरिभाषायाम् ॥ धेनुवत्सौघृतस्यैतौसित
सूक्ष्मांबरावृतौ ॥ शुक्तिकर्णाविक्षुपादौशुचिमुक्ताफलेक्षणौ ॥ सितसूत्रशिरालौतौसितकंबल
कंबलौ ॥ ताम्रगुडकपृष्ठौतौसितचामररोमकौ ॥ ककुत्प्रदेशोगुडकः ॥ विद्रुमभ्रूयुगोपेतौन
वनीतस्तनान्वितौ ॥ क्षौमपुच्छौकांस्यदोहाविंद्रनीलकतालुकौ ॥ सुवर्णशृंगाभरणौराज
तक्षुरसंयुतौ ॥ नानाफलमयैर्दंतैर्घ्राणगंधकरंडकौ ॥ गंधकरंडकः कर्पूरादिपात्रविशेषः॥
एवंरचित्वाधूपादिभिरभ्यर्चयेत् ॥ वस्त्रमुक्तादीनिभारतोमानाधिक्येफलाधिक्यम् ॥ ॥
अथास्यप्रयोगः ॥ यजमानः कृतनित्यक्रियः पुण्यकालेशुचिरद्येत्यादिममसमस्तपापक्षय
द्वाराश्रीपरमेश्वरप्रीत्यर्थं गुडधेनुदानंकरिष्ये इतिसंकल्प्य ॥ विप्रंवस्त्राभरणादिभिः संपू
ज्यप्रदक्षिणीकृत्यसर्वपापक्षयकामइमांगुडधेनुंगोत्रायशर्मणेब्राह्मणायसुपूजितायतुभ्यमहंसंप्र
ददे नममइतितद्धस्तेसकुशतिलजलंगोपुच्छंदद्यात् ॥ विप्रस्तुदेवस्यत्वेतिप्रतिगृह्यस्वस्ती
त्युक्त्वायथाशास्त्रंकामस्तुतिंपठेत् ॥ ततः सुवर्णदक्षिणांदद्यात् ॥ प्रार्थनामंत्रास्तु ॥ याल

क्ष्मीः सर्वभूतानांयाचदेवेष्ववस्थिता ॥ धेनुरूपेणसादेवीवांछितंमेप्रयच्छतु ॥ देहस्थायाचरु
द्राणीशंकरस्यसदाप्रिया ॥ धेनुरूपेणसादेवीममपापंव्यपोहतु ॥ विष्णोर्वक्षसियाल
क्ष्मीः स्वाहायाचविभावसोः ॥ चंद्रार्कशक्रशक्तिर्याधेनुरूपास्तुसाश्रिये ॥ चतुर्मुखस्ययाल
क्ष्मीर्यालक्ष्मीर्धनदस्यच ॥ यालक्ष्मीर्लोकपालानांसाधेनुर्वरदास्तुमे ॥ स्वधात्वंपितृमुख्यानां
स्वाहायज्ञभुजांतथा ॥ सर्वपापहराधेनुस्तस्माच्छांतिंप्रयच्छमे इति ॥ एवमामंत्र्यब्राह्मणाय
तांधेनुंनिवेदयेत् ॥ एतदेवविधानंसर्वधेनूनाम् ॥ प्रत्यक्षधेनुव्यतिरिक्तानामित्यर्थः ॥ उक्तर
चनायास्तत्रानुपयोगात् ॥ ततोभूयसींदक्षिणांदत्वा ब्राह्मणान्भोजयेदिति ॥ एतदेववि
धानंस्यात्तएवोपस्कराः स्मृताः ॥ अयनेविषुवेपुण्येव्यतीपातेतथापुनः ॥ गुडधेन्वादयःस
र्वाउपरागादिपर्वसु ॥ यथाशक्तिप्रदातव्याभुक्तिमुक्तिफलप्रदाः इति ॥ अन्नद्रोणपरिमाणा
तिलधेनुरुक्ता कल्पतरौ ॥ तत्प्रकारस्तु विष्णुधर्मोत्तरे ॥ अनुलिप्तेमहीपृष्ठेवस्त्राजिनकुशावृ
ते ॥ धेनुंतिलमयींकृत्वासर्वरत्नैरलंकृताम् ॥ धेनुंद्रोणेनकुर्वीतआढकेनतुवत्सकम् ॥ स्वर्णशृं
गींरौप्यखुरांगंधघ्राणवतींतथा ॥ कुर्याच्चशर्कराजिह्वांगुडास्यामाविकंबलाम् ॥ इक्षुपादांताम्रपृ
ष्ठींशुचिमुक्ताफलेक्षणाम् ॥ प्रशस्तपात्रश्रवणांफलदंतमयींशुभाम् ॥ स्रग्दामपुच्छांकुर्वीतन

वनीतस्तनान्विताम् ॥ सितवस्त्रयुगच्छन्नांघंटाभरणभूषिताम् ॥ ईदृक्संस्थानसंपन्नांकृत्वा
श्रद्धासमन्वितः ॥ कांस्योपदोहनांदद्यात्केशवः प्रीयतामिति ॥ इतिकर्तव्यता ॥ मंत्रास्तु
गुडधेनूक्ताएव ॥ प्रार्थनामंत्रास्तु वह्निपुराणे । तिलाश्चपितृदेवत्यानिर्मिताश्चेहगोसवे ॥ ब्रह्म
णातन्मयीधेनुर्दत्ताप्रीणातुकेशवः इतिमंत्रांतरमुक्तम् ॥ प्रतिमातिलधेन्वादीनांविक्रयाद्युक्तं
हेमाद्रौ ब्रह्मवैवर्ते । दानकालेतुदेवत्वंप्रतिमानांप्रकीर्तितम् ॥ धेनूनामपिधेनुत्वंश्रुत्युक्तंदान
योगतः ॥ दातुर्वैदानकालेतुधेनवः परिकीर्तिताः ॥ विप्रस्यव्ययकालेतुद्रव्यंतदितिनिश्चयः
दानसंबंधिविप्रेणद्रव्यमागच्छतागृहम् ॥ तत्सर्वंविदुपातेनविक्रेयंस्वेच्छयाविभो ॥ कुटुंबभर
णंकार्यंधर्मकार्यंचसर्वशः ॥ अन्यथानरकंयातीत्येवमाहपितामहः इति ॥ इतितिलधेनुदानम्
॥ ॥अथघृतधेनुदानं विष्णुधर्मोत्तरे॥तिलाभावेतथादद्यात्घृतधेनुंप्रयत्नतः॥वासुदेवंजगन्ना
थंघृतक्षीराभिषार्चितम् ॥ संपूज्यपूर्ववत्पुष्पैर्धूपदीपादिभिर्नरैः ॥ तत्रैव विधानमाह ॥ गव्य
स्यसर्पिषःकुंभंपुष्पमालादिभूषितम् ॥ कांस्यापिधानसंयुक्तंसितवस्त्रयुगेनच ॥ हिरण्यसहितं
तद्वन्मणिविद्रुममौक्तिकैः ॥ अत्रपलसहस्रपरिमाणंकुंभः ॥ द्वादशपलाधिकपंचशतपलाधि
कोवा ॥ इक्षुयष्टिमयान्पादान्खुरान्रौप्यमयांस्तथा ॥ सौवर्णेचाक्षिणीकुर्याच्छृंगेचागुरुका

ष्ठजे ॥ सप्तधान्यमयेपार्श्वे पत्रोर्णेनवकंबले ॥ पत्रोर्णधौतकौशेयम् ॥ कर्पूरघ्राणम् फलमयां
स्तनान् शर्करयाजिह्वा गुडक्षीरमयंमुखम् क्षौमंपुच्छम् रोमाणिसितसर्षपैः ताम्रपृष्ठीम् एता
दृशींकृत्वा विधिनासंपूज्य तथा ब्राह्मणंयथाविभववस्त्रालंकारादिभिःसंपूज्य दद्यात् ॥ विधि
स्तुप्राग्वत् ॥ मंत्रस्तु स्कांदे । घृतंगावःप्रसूयंतेघृतंभूम्यांप्रतिष्ठितं ॥ घृतमग्निश्चदेवाश्चघृतं
मेसंप्रदीयतां इति दानफलमपितत्रैव । घृतक्षीरवहानद्योयत्रपायसकर्दमाः ॥ तेषुलोकेषुसर्वे
षुपुण्येषुप्रजायते ॥ सकामानामियंव्युष्टिःकथितानृपसत्तम ॥ व्युष्टिः फलम् ॥ विष्णु
लोकंनरायांतिनिष्कामाधेनुदानत इति ॥ दक्षिणातु हिरण्यमेव हेमाद्रिः सुवर्णप्रभृतिशक्त्या
वेत्युक्तं मदनरत्ने ॥ इतिघृतधेनुदानम् ॥ ॥ अथजलधेनुदानम् ॥ ॥ स्कांदे । जलकुंभंनर
व्याघ्रसुवर्णरजतान्वितम् ॥ सुवर्णशृंगरजतखुरान्वितमितिस्मृतम् ॥ रत्नगर्भमशेषैस्तुग्राम्यै
र्धान्यैःसमन्वितम् ॥ सितवस्त्रयुगच्छन्नंदूर्वापल्लवशोभितम् ॥ कुष्ठमांसीमुरोशीरवालकामल
कैर्युतम् ॥ प्रियंगुपत्रसहितंसितवस्त्रोपवीतिनम् ॥ सच्छत्रंसदुपानत्कंदर्भविष्टरसंस्थितम् ॥
चतुर्भिःसंभृतंभूयस्तिलपात्रैश्चतुर्दिशम् ॥ स्थगितंदधिपात्रेणघृतक्षीरवतामुखे ॥ तिलपात्रा
णिताम्रमयानिदधिपात्रंकांस्यमयम्॥ उपोषितोवासुदेवंजलेशयमभ्यर्च्य संकल्प्य जलधेनुंवि

प्रंचवस्त्रादिभिः संपूज्य सवत्सांजलधेनुंगुडधेनुमिवदद्यात् ॥ ततोयालक्ष्मीरित्यादिपूर्वोक्तमं
त्रैःप्रार्थयेत् ॥ ॥ इतिजलधेनुदानम् ॥ ॥ अथक्षीरधेनुदानम् ॥ ॥ स्कांदे । क्षीरधेनुंप्रवक्ष्या
मितांनिबोधनराधिप ॥ अनुलिप्तेमहीपृष्ठेगोमयेननराधिप ॥ गोचर्ममानमात्रेणकुशाना
स्तीर्यसर्वतः ॥ तस्योपरिमहाराजन्यसेत्कृष्णाजिनंततः ॥ तत्र गोपयेनकुंडलिकांकृत्वा त
त्क्षीरकुंभं चतुर्थांशेनवत्सकंचसंस्थाप्य चंदनागुरुशृंगी प्रशस्तपत्रश्रवणा तिलपात्रोपरिन्य
स्ता हेमयुक्तगुडमुखी शर्कराजिह्वाफलदंती मुक्ताफलेक्षणा इक्षुपादा दर्भरोमा सितकंबला
एतादृशींसवत्सामभ्यर्च्य द्विजंचवस्त्रालंकारादिभिः संपूज्य अद्येत्यादि गोत्रायशर्मणेसालं
कृताय इमांक्षीरधेनुंपूर्वोक्तसोपस्करयुतां समस्तपापक्षयकामस्तुभ्यमहंसंप्रददे नममेतिवदे
त् ॥ देवस्यत्वा० स्वस्तीत्युक्त्वायथाशास्त्रंकामस्तुतिंपठेत् ॥ ततोयालक्ष्मीरित्यादिमंत्रैः
प्रार्थयेत् ॥ ॥ इतिक्षीरधेनुदानम् ॥ ॥ अथमधुधेनुदानम् ॥ ॥ स्कांदे ॥ मधुधेनुं
प्रवक्ष्यामिसर्वपापप्रणाशिनीम् ॥ अनुलिप्तेमहीपृष्ठेकृष्णाजिनकुशोत्तरे ॥ मधुकुंभंसंस्थाप्य
सवत्सांमधुधेनुंप्रकल्पयेत् ॥ ततस्तच्चतुर्दिक्षुचत्वारिपात्राणिविन्यस्य तांचवस्त्रयुग्मेनाच्छाद्य
मधुवाताऋतायतइतिमंत्रमुक्त्वा तांधेनुंद्विजंचपूर्ववदभ्यर्च्य अद्येत्यादिगोत्रायशर्मणेसालंकृता

य सौवर्णमुखीं अगरुचंदनशृंगींताम्रपृष्ठींसूत्रपुच्छां इक्षुपादांसितकंबलकंबलांगुडमुखींशर्क
राजिह्वांमौक्तिकनेत्रांफलदंतींदर्भरोमांप्रशस्तपत्रश्रवणांनवनीतस्तनींसप्तधान्योपेतांघंटाभर
णभूषितांकांस्यदोहां सुपूजितांइमांमधुधेनुंसर्वपापक्षयकामः पुच्छदेशोपविष्टायतुभ्यमहंसंप्र
ददेनममेति ॥ ततः सुवर्णदक्षिणांदत्वा ॥ यालक्ष्मीरित्यादिपूर्वोक्तमंत्रैः प्रार्थयेत् ॥ ॥ इति
मधुधेनुदानम् ॥ ॥ अथशर्कराधेनुदानम् ॥ ॥ स्कांदे ॥ तद्वच्चशर्कराधेनुंशृणुराजन्य
थार्थतः ॥ अनुलिप्तेमहीपृष्ठेकृष्णाजिनकुशोत्तरे ॥ भारचतुष्टयपरिमिताधेनुस्तच्चतुर्थांशो
वत्सः॥भारद्वयेअष्टमांशइति स्वशक्त्यावाकार्या सर्वधान्यानिचतुर्दिक्षुसंस्थाप्य अद्येत्यादि०
गोत्रायशर्मणेसालंकृताय इमांशर्कराधेनुं सुवर्णशृंगींमौक्तिकनयनांगुडमुखींपिष्टमयजिह्वांकं
बलपट्टसूत्रेणवेष्टितां कंठाभरणभूषितां इक्षुपादां रौप्यखुरां नवनीतस्तनीं प्रशस्तपर्णश्रवणां
सितचामरभूषितां पंचरत्नसमायुक्तां दर्भरोमां कांस्यदोहनां गंधपुष्पाद्यर्चितांसमस्तपापक्षय
कामस्तुभ्यमहंसंप्रददे नममेति सुवर्णदक्षिणांदद्यात् ॥ ततोयालक्ष्मीरित्यादिमंत्रैः संप्रार्थ्य
भूयसींदद्यात् ॥ विप्रमुखंनेक्षेदिति ॥ पंचरत्नानितु अपरार्के । कनकंहीरकंनीलंपद्मरागंचमौ
क्तिकम् ॥ पंचरत्नमिदंप्रोक्तमृषिभिः पूर्वदर्शिभिरिति ॥ इतिशर्कराधेनुदानम् ॥ अथदधि

धेनुदानम् ॥ स्कांदे । तत्र उपलिप्तायांभूमौ आस्तीर्णे कुशकृष्णाजिनेसप्तधान्योपरिदधि
कुंभंसंस्थाप्य चतुर्थांशेनवत्संकृत्वागोत्रायशर्मणेसालंकृताय सुवर्णमुखीं प्रशस्तपत्रश्रव
णांमुक्ताफलेक्षणांचंदनागरुशृंगीं मुखेविशेषगंधद्रव्यैर्युक्तां शर्करयाकृतजिह्वां श्रीखंडेन
कृतघ्राणां फलमयदंतां सितकंबलच्छन्नां दर्भरोमां सूत्रमयपुच्छां रौप्यमुखीं वा
नवनीतस्तनीमिक्षुपादां सर्वाभरणभूषितां वस्त्रयुग्मेनाच्छादितां गंधपुष्पाद्यर्चितां इमां
दधिधेनुं सर्वपापक्षयकामो दधिक्राव्णइतिमंत्रंपठित्वा तुभ्यमहंसंप्रददे नममेति गुडधे
नूक्तमंत्रेणवादद्यात् ॥ ततःसुवर्णदक्षिणांदत्वा यालक्ष्मीरित्यादिमंत्रैः प्रार्थयेत् ॥ इतिदधिधेनु
दानम् ॥ ॥ अथरसधेनुदानम् ॥ स्कांदे । रसधेनुंमहाराजकथयामिसमासतः ॥ अनुलि
प्तेमहीपृष्ठेकृष्णाजिनकुशोत्तरे ॥ इक्षुरसस्यघटंपूरयित्वा तच्चतुर्थांशेनवत्संसंपाद्य अद्येत्या
दि० गोत्रायशर्मणेसालंकृताय इमांरसधेनुं सुवर्णशृंगाभरणयुतांरौप्यखुरां वस्त्रपुच्छां इक्षु
पादां पुष्पकंबलां ताम्रपृष्ठीं पुष्परोमां व्रीहियुतां चतुर्दिक्षुदीपसमायुक्तां सर्वगंधविभूषि
तां पूर्वादिदिक्षुतिलपात्रचतुष्टयावृतां सुपूजितायसर्वपापक्षयपूर्वकैकविंशतिकुलोद्धरणकाम
स्तुभ्यमहंसंप्रददे नममेति सुवर्णदक्षिणांदद्यात् ॥ मंत्रास्तु गुडधेनूक्ताएवशेषोपस्कराश्च ॥

एवमुच्चारयित्वातुदीयतेवैद्विजन्मने ॥ दशपूर्वान्परांश्चैवआत्मानंचैकविंशतिः इति ॥ ॥ इ
तिरसधेनुदानम् ॥ ॥ अथस्वरूपतोगोदानम् ॥ अंगिराः । गौरेकस्यैवदातव्याश्रोत्रिया
यकुटुंबिने ॥ साहितारयतेपूर्वान्सप्तसप्तचसप्तच इति ॥ देवलः । सुशीलांलक्षणवतींयुवतीं
वत्ससंयुताम् ॥ बहुदुग्धवतींस्निग्धांधेनुंदद्याद्विचक्षणे ॥ ॥ अथगोदानप्रयोगः ॥ ॥ कर्ता
कृतनित्यक्रियः पुण्यकाले अद्येत्यादि ० ॥ यथाशक्तियथाज्ञानंगोदानमहंकरिष्ये इतिसंक
ल्प्य सवत्सांधेनुंद्विजंचयथाविभववस्त्रालंकारादिभिः संपूज्य गोशृंगमूलादिस्तनांतस्थाना
दिषु देवताःपूजयेत् ॥ तद्यथा । शृंगमूलेब्रह्मविष्णुभ्यांनमः ब्रह्मविष्णूपूजया० ॥ शृंगाग्रेसर्व
तीर्थेभ्योनमः सर्वतीर्थानिपूजयामि ॥ एवंसर्वत्र । शिरोमध्येशिवाय० ॥ ललाटे देव्यैनमः० ॥
नासिकायां षण्मुखाय० ॥ नासापुटयोः कंबलाश्वतरनागाभ्यां० ॥ कर्णयोः अश्विभ्यां० ॥
चक्षुषोः शशिभास्कराभ्यां० ॥ दंतेषुवायवे० ॥ जिह्वायां वरुणाय० ॥ हुंकारे सरस्वत्यै० ॥
गंडयोःपक्षमासाभ्यां० ॥ ओष्ठयोः संध्याद्वयाय० ॥ ग्रीवायां इंद्राय० ॥ कुक्षिदेशेरक्षोभ्यो०
॥ उरसि साध्येभ्यो० ॥ पादेषु धर्माय० ॥ जंघासु अधर्माय० ॥ खुरमध्येगंधर्वेभ्यो० ॥
खुराग्रे पन्नगेभ्यो० ॥ खुरपश्चिमाग्रे अप्सरोभ्यो० ॥ पृष्ठे एकादशरुद्रेभ्यो० ॥ सर्वसंधिषुवसु

भ्यो० ॥ श्रोणितटे पितृभ्यो० ॥ लांगूले सोमाय० ॥ शुक्ले आदित्यरश्मिभ्यो० ॥
गोमूत्रे गंगायै० ॥ गोमये यमुनायै० ॥ क्षीरे सरस्वत्यै० ॥ दध्नि नर्मदायै० ॥ घृते अग्नये०॥
रोमसु अष्टाविंशतिदेवकोटिभ्योन० ॥ उदरे पृथिव्यै० ॥ पयोधरेषु चतुःसमुद्रेभ्यो०चतुरः
समुद्रान्पूजयामि ॥ एतादेवताअंगेषुसंपूज्य अद्येत्यादि गोत्रायशर्मणेसुपूजितां पृथ्वीदानसम
फलकामः सर्वपापक्षयकामो विष्णुप्रीतिकामोवा इमांप्रत्यक्षधेनुं सुवर्णशृंगीं रौप्यखुरां ताम्र
पृष्ठीं घंटाग्रैवेयकां मुक्तालांगूलां कांस्योपदोहनीं सितवस्त्रद्वयोपेतां सर्वाभरणभूषितां
सोपस्करां रुद्रदेवत्यां तुभ्यमहंसंप्रददे नममेति तिलपात्रेघृताक्तंगोपुच्छंकृत्वा विप्रहस्तेस
तिलकुशोदकंदद्यात् ॥ मंत्रस्तु ॥ यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी ॥ वि
श्वरूपधरोदेवः प्रीयतामनयागवा ॥ ततोदाता दानप्रतिष्ठासिद्ध्यर्थंसुवर्णदक्षिणांदत्वा
प्रार्थयेत् ॥ नमोगोभ्यःश्रीमतीभ्यः सौरभेयीभ्यएवच ॥ नमोब्रह्मसुताभ्यश्चपवित्राभ्योनमो
नमः ॥ पूजितासिवसिष्ठेनविश्वामित्रेणधीमता ॥ सुरभेहरमेपापंयन्मयादुष्कृतंकृतम् इति ॥
गावोममाग्रतः संतुगावोमेसंतुपृष्ठतः ॥ गावोमेहृदयेसंतुगवांमध्येवसाम्यहम् इतिपठित्वा धे
नुंद्विजंचप्रदक्षिणीकृत्य किंचिदनुव्रजेत् ॥ इतिगोदानप्रयोगः ॥ ॥ अथश्वेतवर्णादिगोदान

फलमुक्तं पाद्मे ॥ श्वेतासुतप्रदाप्रोक्ता चंद्रलोकप्रदायिनी॥ कृष्णास्वर्गप्रदाज्ञेयागौरीस्यात्कु७
र्गनिनी॥ कपिलासर्वपापघ्नीनानावर्णांचमोक्षदाइति ॥ अथसमानवर्णगोवत्सदानफलम् ॥ महा
भारते॥रोहिणींतुल्यवर्णांतुसवत्सांचपयस्विनीम् ॥प्रदत्वावस्त्रसंवीतांसूर्यलोकेमहीयते॥समा
नवत्सांकृष्णांतुधेनुंसर्वाघनाशिनीम् ॥ सुव्रतांवस्त्रसंवीतामस्मिंल्लोकेमहीयते॥ वातरेणुसवर्णां
तुसवत्सांकांस्यदोहनीम् ॥ प्रदायवस्त्रसंवीतांवारुणंलोकमश्नुते ॥ हिरण्यवर्णांपिंगाक्षींसवत्सां
दक्षिणायुताम् ॥ प्रदद्याद्वस्त्रसंवीतांकौवेरंलोकमाप्नुयात् ॥ पलालधूम्रवर्णांतुपितृलोकेमही
ते ॥ संवत्सांपीवरांदत्वाशितिकंठामलंकृताम् ॥ वैश्वेदेवमसंबाधंस्थानंश्रेष्ठंप्रपद्यते ॥ समा
नवत्सांगौरींतुधेनुंसर्वाघनाशिनीम् ॥ सवत्सांकांस्यदोहांतुवसूनांलोकमाप्नुयात् ॥ वत्सोपप
न्नांनीलांगींसर्वरत्नसमन्विताम् ॥ गंधर्वाप्सरसांलोकान्दत्वाप्राप्नोतिमानवः इति ॥ संकल्पेतु
तत्फलंसंकीर्त्यदद्यात् ॥ इतिसमानवर्णगोवत्सदानफलम् ॥ ॥ अथकृष्णधेनुदानम् ॥
मात्स्ये । अद्येत्यादि संकल्पादिपूर्ववत् ॥ मंत्रस्तु । कृष्णधेनोनमस्तुभ्यंब्रह्मविष्णुशिवात्म
के ॥ त्रिजन्मार्जितपापानिध्रुवंदानात्प्रणाशयइति ॥ ॥ अथहेमशृंगीदानम् ॥ मात्स्ये ।
दशसौवर्णिकेशृंगेखुराःपंचपलान्विताः ॥ पंचाशत्पलंकांस्यंताम्रंचापितथैवच ॥ वस्त्रंचित्रं

गुणंधेन्वादक्षिणाचचतुर्गुणेति ॥ एवंविधिवद्दातुःफलंमुक्तंनंदिपुराणे ॥ विधिनातुपयदादत्ता
पात्रेधेनुःसदक्षिणा ॥ दातातारयतेजन्तून्कुलानामयुतंशतम् । इति महाभारतेपि । प्रासादा
यत्रसौवर्णाः शय्यारत्नोज्ज्वलास्तथा ॥ वराश्चाप्सरसोयत्रतत्रगच्छन्तिगोप्रदाः ॥ तथा ।
यावंतिरोमाणिभवन्तिधेन्वास्तावन्तिवर्षाणिमहीयतेसः ॥ स्वर्गाच्च्युतश्चापिततोत्रलोकेकुलेस
मुत्पत्स्यतिगोमतांतथा ॥ सालंकृतांसवत्सांचधेनुंसंपूज्यभक्तितः ॥ सरत्नपूर्णांपृथिवींतेनद
त्तानसंशय इति ॥ इतिस्वरूपतोगोदानम् ॥ अथकार्पासधेनुदानम् ॥ मात्स्ये । अतःपरं
प्रवक्ष्यामिधेनुंकार्पासिकींभुवि ॥ सर्वविश्वस्यगुप्त्यर्थंब्रह्मणाचांशुकंकृतम् ॥ साचकार्पासभा
रेणश्रेष्ठाधेनुः प्रकीर्तिता॥ मध्यमाचतदर्धेनतदर्धेनकनीयसी ॥ पूर्ववस्त्रंचधान्यंतद्धिरण्यंचतथै
वच॥वत्सकंतुचतुर्थांशान्मानमत्राभिधीयते ॥ कुर्वीतपूर्ववद्धस्तवस्त्रधान्याद्युपस्कृतं इति ॥
ततोवाराहोक्ततिलधेनुदानवत्क्रियाकल्पादिसंकल्पादारभ्यदानंकृत्वा प्रार्थयेत् ॥ मन्त्रास्तु॥
हेमकुंदेंदुसदृशेक्षीरार्णवसमुद्भवे ॥ सोमप्रियेसुधन्वाख्येसोरभेयिनमोस्तुते ॥ दत्तेयमिंदुना
थायशशांकायामृतायच ॥ अत्रिनेत्रप्रजातायसोमराजायवैनमः ॥ यस्त्वेवंपरयाभक्त्याब्राह्म
णायप्रयच्छति ॥ सयातिचन्द्रलोकंतुसोमेनसहमोदते इतिकार्पासधेनुदानम् ॥ ॥ अथल

वणधेनुदानम् ॥ भविष्ये ॥ तत्रयुधिष्ठिरंप्रतिकृष्णः ॥ शृणुराजन्प्रवक्ष्यामिलवणस्येहकल्पि
ताम् ॥ गोमयेनानुलिप्तेतुदर्भसंस्तरसंस्थितम् ॥ आविकंचर्मविन्यस्यपूर्वाशाभिमुखस्थित
म् ॥ वस्त्रेणाच्छादितांकृत्वाधेनुंकुर्वीतबुद्धिमान् ॥ आढकेनैवकुर्वीतबहुवित्तोपकल्पिताम् ॥
गांविप्रंचयथाविभवंवस्त्रालंकारादिभिः संपूज्य ॥ अद्येत्यादि० गोत्रायशर्मणेसुपूजिताय इमां
लवणधेनुं फलस्तनीं सिंधुशुक्तिवर्णां सक्तुपिंडकपोलां यवास्यां कंबलपट्टसूत्रग्रैवेयकां ताम्र
पृष्ठां गुडपानां सर्वाभरणभूषितां सर्वपापक्षयकामोविष्णुप्रीतिकामोवा तुभ्यमहंसंप्रददे नम
मेति पुत्रभार्यादियुतः प्रदक्षिणीकृत्यदद्यात् ॥ शेषंमधुधेनुवत् ॥ मंत्रस्तु॥लवणेवैरसाः सर्वे
सर्वास्तिष्ठंतिदेवताः॥सर्वदेवमयेदेविलवणाख्येनमोस्तुते इति॥पुराणांतरेषु षोडशप्रस्थमिता
चतुर्थांशेनवत्सइत्युक्तम्॥इतिलवणधेनुदानं॥अथसुवर्णधेनुदानम्॥वह्निपुराणे॥सुवर्णधेनुश्चा
प्यत्रसुवर्णाश्चचतुर्दश॥सुनिर्णिक्तसुवर्णैश्चशतभिर्मध्यमामता ॥ चतुर्भिश्चकनिष्ठास्याच्चतुर्थां
शेनवत्सकः॥गुडधेनुविधानेनदत्तासर्वफलप्रदा॥अत्रविशेषोरौप्येणवत्स इतिकेचित् ॥तथा।
अद्येत्यादि० प्रवालशृंगीं घृतपात्रस्तनवतीं पद्मरोमां कर्पूरागरुनासिकामिष्टान्नरसवासितां
शंखशृंगांतरां शुक्तिललाटस्थां नारिकेलश्रवणांगुडजानुकां पंचगव्यापानवतीं कांस्यपृष्ठां

नवे अन्याभ्यः पतिपुत्रवतीभ्योब्राह्मणीभ्यः षडष्टौवादद्यात् ॥ ततोवेदपारगमलोलुपंब्राह्मणं
ऋणग्रस्तंदरिद्रंकुटुंबिनमाहूयवृत्वा यथाविभवंवस्त्रालंकारादिभिः संपूज्य ततोधेनुं सोमोधे
नुमितिमंत्रेणसवत्सांचसंपूज्य अग्निमुपसमाधाय समिदाज्यचरुद्रव्यैः सोमोधेनुमितिमं
त्रेणप्रत्येकमष्टोत्तरशतसंख्ययाहुत्वा स्वयमुदङ्मुखः प्राङ्मुखायोपविष्टायगोपुच्छंतद्ध
स्तेनिधायदद्यात् ॥ अद्येत्यादि इमां सवत्सां रौप्यखुरां रत्नपुच्छां घंटायुतकंठां
रत्नतिलकां वायनोपेतां वस्त्रयुगच्छन्नां मुक्तालांगूलां यथाशक्तिसोपस्करां रुद्रदेवत्यांवं
ध्यात्वहरां ममजीवत्पुत्रसंतानप्रतिबंधकीभूतसकलदुरितानिरसनपूर्वकं आयुष्मत्सुपुत्राप्त्याव
तिसिद्ध्यर्थंगोत्रायशर्मणेसुपूजितायतुभ्यमहंसंप्रददे नममेतिसकुशतिलोदकंदद्यात् ॥ ॥
मंत्रस्तु वायवीये । धेनुरंगिरसःसत्रेवासिष्ठसुरभिस्तथा ॥ दुहिताचसुताभानोरग्नेश्चवरु
णस्यच ॥ याश्चगावः प्रवर्ततेवनेपूपवनेषुच ॥ प्रीणंतुताममसदापुत्रपौत्रप्रवर्धनाः ॥ प्रय
च्छंतुदिवारात्रमविच्छेदंचसंततेः ॥ ततोदेवस्यत्वा० स्वस्तीत्युक्त्वायथाशाखंकामस्तुतिंपठे
त् ॥ ततःसुवर्णदक्षिणांदत्वाप्रार्थयेत् । मंत्रस्तु ॥ वंध्यात्वंकाकवंध्यात्वंकन्याप्रसवएवच ॥
तथैवमृतवंध्यात्वंदोषंममचतुर्विधम् ॥ दानेनानेनहरतुयासाकामदुघामम इति ॥ इतिगोप्रा

र्थयित्वाप्रदक्षिणीकृत्यविसृज्यभूयसींदक्षिणांदत्वायथाशक्तिब्राह्मणान्भोजयित्वा जीवत्पुंसं
तानावाप्तिरस्त्विततितान्संप्राथ्यं जीवत्पुंसंतानावाप्तिरस्त्विततितेब्रूयुः । ततः सुहृद्युतो भुंजी
तेति ॥ इतिवंध्यात्वहरंसुवर्णधेनुदानं ॥ ॥ अथोभयतोमुखीदानं ॥ ॥ मात्स्ये ॥ रुक्म
शृंगींरौप्यखुरां मुक्तालांगूलभूषिताम् ॥ कांस्योपदोहनांराजन्सवत्सांद्विजपुंगवे ॥ प्रसूयमा
नांयोदद्याद्धेनुंद्रविणसंयुतां ॥ यावद्वत्सोयोनिगतोयावद्गर्भंनमुंचति ॥ तावद्गौःपृथिवीज्ञेया
सशैलवनकानना ॥ देवलः ॥ अलंकृत्योक्तविधिनासुवर्णत्रिपलान्विता ॥ देयाचद्विपलाम
ध्यापलैकादक्षिणाधमा ॥ वाराहेतु सुवर्णसाहस्रंतदर्धार्धमुख्यमुक्तं ॥ सुवर्णस्यसहस्रेणत
दर्धेनापिवापुनः ॥ तस्याप्यर्धशतंवापिपंचाशच्चततोऽर्धकं ॥ यथाशक्त्यापिदातव्याविक्तशा
ठ्यविवर्जिता इति ॥ हेमाद्रौ उभयतो मुखींस्वर्णनिष्केणदत्वासद्यःशुध्येत्पातकेभ्यश्चम
त्यः ॥ इति । सुवर्णनिष्कदक्षिणायुतेनापि । अत्रनिष्कश्चत्वारिंशन्माषकएवग्राह्यः ॥ अ
त्यशक्तोदरिद्रेण विंशतिमाषकंवादद्यादित्यर्थः ॥ अथदानप्रयोगः शुचिर्द्वेत्यादि०
उभयतोमुखीदानंकर्तुं गोब्राह्मणपूजांचकरिष्ये ॥ इतिसंकल्प्य ॥ द्विजंकुटुंबिनंद
रिद्रंवेदपारगंसुशीलंवृत्वायथाविभवं वस्त्रालंकारादिभिः तथागामपि संपूज्य ॥ ॐत्वं

महीमवींनविश्वधेनांतुवींतियेवैय्यायक्षरंतीं ॥ अरमयोनमसैचदर्णःसुतरणाँअकृणोरिंद्र सिंधून् इतिगामनुमंत्र्यप्रदक्षिणीकृत्य अद्येत्यादि० धेनुवत्सरोमसंख्ययुगदेवलोकमहिमत्व पितृपितामहप्रपितामहकुलशतनरकोत्तारणपूर्वकघृतक्षीरवहबहुकुल्याकदधिपायसकर्दमदे शाधिकरणकोत्तारकेप्सितकामोब्रह्मलोकास्तिकामःसमुद्रशैलवनोपेतपृथ्वीदानसमफलावाप्त येसोपस्करामुभयतोमुखीं रुद्रदेवत्यां इमांधेनुंगोत्रायशर्मणेअमुकशाखाध्यायिनेतुभ्यमहं संप्रददेनममेति सघृततिलपूर्णकांस्यपात्रयुतगोपुच्छंतद्धस्तेसकुशजलंदत्वाप्रार्थयेत् ॥ मंत्र स्तु । इमांगृहाणोभयमुखींभवात्रातामभास्तुवै ॥ ममवंशविशुद्ध्येश्वसदास्वस्तिकरोभव इति॥ विप्रोदेवस्यत्वेतिप्रतिगृह्यस्वस्तीत्युक्त्वायथाशाखंकामस्तुतिंपठेत्॥ततःसुवर्णसहस्रमारभ्य पंचविंशतिचतुर्द्विसुवर्णमितांदक्षिणांदद्यात् ततोनन्यूनामिति ॥ ततोविप्रस्तु॥ ॐइरावती धेनुमतीहिभूतंसूयवसिनीमनुपेदशस्या ॥ व्यस्तभ्नारोदसीविष्णवेतेदाधर्थपृथिवीमभितोम यूखैः ॥ १ ॥ ॐस्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथः ॥ २ ॥ इतिमंत्रद्व यंपठित्वावदेत् । प्रत्यगृह्णामिमांधेनुंकुटुंबार्थेविशेषतः ॥ स्वस्तिर्भवतुमेनित्यंरुद्रमातर्नमो स्तुते ॥ इतिनरवागृहीतायाः दक्षिणेनपाणिनावत्समाकृष्यपठेत् ॥ ॐगर्भेनुसन्नन्वेषामवेदम्

हंदेवानांजनिमानिविश्वा ॥ शतंमापुरआयसीररक्षन्नधश्येनोजवसानिरदीयम् ॥ इतिमंत्रेणव
रसमाकृष्येत् ॥ निष्कासितेसतिकृत्यांतरमाह ॥ ततोयजमानः प्राणानायम्य अद्येत्यादि०
कृतस्योभयतोमुखीदानकर्मणः सांगतासिद्धयर्थंदेवादिमंत्रैस्तर्पणंहोमंचकरिष्येइतिसंकल्प्य
स्थंडिलेग्निप्रतिष्ठाप्यान्वादध्यात् ॥ अस्मिन्नन्वाहितेग्नावित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वाऽ
त्रप्रधानंपृथिवींत्रिःगौरींसकृदाज्येनप्रजापतिंचतुरशीत्याआज्येनशेषेणस्विष्टकृतमित्यादिस
द्योयक्ष्येइत्यंतमुक्त्वासमिद्द्वयमग्नावाधायइध्मावर्हिषीपरिस्तरणपरिसमूहनादिचक्षुष्यंतंकृत्वा
कुशास्तृतभूमौ अग्नेःपश्चादेवसाक्षताभिरद्भिर्वक्ष्यमाणमंत्रैर्देवादींस्तर्पयेत् ॥ तेचमं
त्राः ॥ ॐ येदेवासोदिव्येकादशस्थपृथिव्यामध्येकादशस्थ ॥ अप्सुक्षितोमहिनैकादशस्थ
तेदेवासोयज्ञमिमंजुषध्वं देवांस्तर्पयामि ॥ ॐ उशंतस्त्वानिधीमह्युशंतःसमिधीमहि ॥ उ
शन्नुशत आवहपितॄन्हविषेअत्तवे॥ पितॄंस्तर्पयामि ॥ ॐ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तो
मंसचतापरुष्ण्या ॥ असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ सरितस्तर्प
यामि ॥ ॐ अद्रिभिः सुतोमतिभिश्चनोहितः प्ररोचयन्रोदसीमातराशुचिः ॥ रोमाण्य
व्यासमयाविधावतिमधोर्धारापिन्वमानादिवेदिवे ॥ पर्वतांस्तर्पयामि ॥ ॐ वनस्पतेशतव

ल्शोविरोहसहस्रवल्शाविवयंरुहेम ॥ यंत्वामयंस्वधितिस्तेजमानः प्रणिनायमहतेसौभगाय॥
वनस्पतींस्तर्पयामि ॥ ॐ समुद्रज्येष्ठाः सलिलस्यमध्यात्पुनानायंत्यनिविशमानाः ॥इं
द्रोयावज्रीवृषभोरराद्ताआपोदेवीरिहमामवन्तु ॥ समुद्रांस्तर्पयामि ॥ ॐ अहिरिवभोगैः पर्यें
तिबाहुंज्यायाहेर्तिपरिबाधमानः ॥ हस्तघ्नोविश्वावयुनानिविद्वान्पुमान्पुमांसंपरिपातुविश्वतः ॥
॥ नागांस्तर्पयामि ॥ ॐ मधुवाताऋतायतेमधुक्षरन्तिसिंधवः ॥ माध्वीर्नः संत्वोषधीः ॥
ओषधीस्तर्पयामि ॥ इत्यष्टाभिस्तर्पयित्वाचतस्रआज्याहुतीर्जुहुयात् ॥ ॐ इळेद्यावापृथि
वीपूर्वचित्तयेग्निंघर्मंसुरुचंयामन्निष्टये ॥ याभिर्भरेकारमंशायजिन्वथस्ताभिरूषुऊतिभिरश्वि
नागतंस्वाहा ॥ पृथिव्याइदंनमम ॥ १ ॥ ॐ महीद्यौः पृथिवीचनइमंयज्ञंमिमिक्षतां ॥ पिपृ
तान्नोभरीमभिः स्वाहा पृथिव्याइदंनमम ॥ २ ॥ ॐ उर्वींपृथ्वींबहुलेदूरेअन्तेउपब्रुवेनमसाय
ज्ञेअस्मिन् ॥ दधातेयेसुभगेसुप्रतूर्तीद्यावारक्षतंपृथिवीनोअभ्वात्स्वाहा ॥ पृथिव्याइदंनम
म ॥ ३ ॥ ॐ गौरीर्मिमायसलिलानितक्षत्येकपदीद्विपदीसाचतुष्पदी ॥ अष्टापदीनवपदीब
भूवुषीसहस्राक्षरापरमेव्योमन्स्वाहा ॥ गौर्याइदंन० ॥ ४ ॥ इतिचतस्रआज्याहुतीर्हुत्वाततः
समस्तव्याहृतिभिश्चतुरशीत्याज्याहुतीर्हुत्वाप्रजापतयइदंनममेतित्यजेत् । ततःस्विष्टकृदादि

होमशेषंसमाप्यभूयसींदक्षिणांदत्वागामनुव्रज्यगोमतींजपेत्॥महाभारते॥मावोमाभुपतिष्ठंतुहे
मशृंग्यः पयोमुचः॥सुरभ्यः सौरभेय्याश्चसरितः सागरंयथा॥गाश्चपश्याम्यहंनित्यंगावःपश्यं
तुमांसदा॥गावोस्माकंवयंतासांयतोगावस्ततोवयं॥ घृतक्षीरप्रदागावो घृतयोन्योघृतावहाः॥
घृतनद्योघृतावर्तास्तामेसंतुसदागृहे ॥ घृतंमेहृदयेनित्यंघृतंनाभ्यांप्रतिष्ठितं ॥ घृतंमेसर्वतश्चै
वघृतमध्येवसाम्यहं ॥ गावोमेअग्रतःसंतुगावोमेसंतुपृष्ठतः ॥ गावोमेहृदये संतुगवांमध्येव
साम्यहं ॥ गावःसुरभयोनित्यंगावोगुग्गुलुसन्निभाः ॥ गावः प्रतिष्ठाभूतानां गावः स्वस्त्य
यनंमहत् ॥ अन्नमेवपरंगावोदेवानांहविरुत्तमं ॥ पावनंसर्वभूतानांरक्षंतिचवहंतिच ॥ हविषा
मंत्रपूतेनतर्पयंत्यमरान्दिवि ॥ ऋषीणामपिहोतॄणांगावोहोमेप्रतिष्ठिताः ॥ सर्वेषामेवभूतानां
गावः शरणमुत्तमं ॥ गावः पवित्रंपरमंगावो मंगलमुत्तमं ॥ गावः सर्वस्यलोकस्यगावोधन्याः
सनातनाः ॥ नमोगोभ्यः श्रीमतीभ्यःसौरभेयीभ्यएवच ॥नमोब्रह्मसुताभ्यश्चपवित्राभ्योनमो
नमः ॥ इतिजपित्वा पुनःतांधेनुंतंद्विजवरंचप्रदक्षिणांकृत्वानमस्कृत्य विसृज्यपायसादिना
सम्यग्द्वादशब्राह्मणान्भोजयित्वातेभ्योदक्षिणांदत्वास्वस्त्ययनंवाचयित्वासुहृद्युतो भुंजीते
ति ॥ ॥ इत्युभयतोमुखीदानप्रयोगः ॥ ॥ अथप्रसंगादुभयतोमुखीप्रतिग्रहप्रायश्चित्तम् ॥

ममोभयतोमुखीप्रतिग्रहदोषपरिहारार्थंकृच्छ्रत्रयप्रायश्चित्तंयथाप्रत्याम्नायेनकरिष्ये इतिसंक
ल्प्यकृच्छ्रत्रयप्रायश्चित्तंकुर्यादित्युक्तंदानोद्योतेऽरुणस्मृतौरहस्यप्रायश्चित्तेष्वशक्तस्य ॥ इ
त्युभयतोमुखीप्रतिग्रहप्रायश्चित्तं ॥ ॥ इत्युभयतोमुखीगोदाननिरूपणं ॥ ॥ अथदशदा
नानि ॥ ॥ मदनरत्नेजातूकर्ण्यः ॥ उत्क्रांत्यादीनिदानानिदशदद्यान्मृतस्यतु ॥ गोभूति
लहिरण्याज्यवासोधान्यगुडानिच ॥ रौप्यंलवणमित्याहुर्दशदानान्यनुक्रमादिति ॥ एतानिद
शदानानिनराणांमृत्युजन्मनोः ॥ कुर्यादभ्युदयार्थंचप्रेतेऽपिहिपरत्रच ॥ इति हेमाद्रिः ॥ त
त्रादौगोदानम् ।दानविधिस्तुपूर्वोक्तएव।ममसर्वपापक्षयार्थंइमांगांधेनूपस्करांरुद्रदेवत्यांसुवर्णा
दिदक्षिणायुतांगोत्रायशर्मणेसुपूजितायतुभ्यमहंसंप्रददेनममेति ॥ मंत्रस्तु ॥ यज्ञसाधन
भूतायाविश्वस्यान्नप्रदायिनी ॥ विश्वरूपधरोदेवः प्रीयतामनयागवा ॥ गवामंगेष्वित्यादिना
प्रार्थयेत् ॥ इतिगोदानं ॥ अथभूमिदानं ॥ मात्स्ये ॥ निवर्तनमिताभूमिर्देया ॥ दशहस्तेन
दंडेनत्रिंशद्दंडानिवर्तनम् इतिस्मरणात् । दानान्यन्यानिसर्वाणिकनकादीनियानिच ॥ तानि
भूमिप्रदानस्यकलांनार्हंतिषोडशीम् इति ॥ अद्येत्यादि० षष्टिवर्षसहस्रपरिमितस्वर्गेशिवपुर
निवासकामः सर्वपापक्षयकामइमांभूमिंबहुसस्यप्रदांविष्णुदेवत्यांगोत्रायशर्मणेसुपूजितायतु

भ्यमहंसंप्रददे नममेतिदद्यात् ॥ मंत्रस्तु ॥ सर्वेषामाश्रयाभूमिर्वराहेणसमुद्धृता ॥ अनंतसस्य फलदाअतः शांतिंप्रयच्छमे ॥ यस्यांरोहंतिबीजानिकालेचैवमहीतले ॥ त्वत्प्रसादाच्चस कलाममसंतुमनोरथाः इति ॥ इतिभूमिदानं ॥ अथतिलदानं ॥ तिलास्तुद्रोणत्रय मितादेयाः ॥ पंचमणपरिमिताभवंति । अद्येत्यादि० इमांस्तिलान्सोमदैवतान्विष्णुदेव तान्वासर्वपापक्षयकामोगोत्रायशर्मणेतुभ्यमहंसंप्रददेनममेति ॥ मंत्रस्तु ॥ महर्षेर्गोत्रसंभूताः कश्यपस्यतिलाः स्मृताः ॥ तस्मादेषांप्रदानेनममपापंव्यपोहतु ॥ इतितिलदानं ॥ अथहि रण्यदानं ॥ तच्चनिष्कत्रयमितंकनिष्ठं ॥ द्वादशमापकोनिष्कः ॥ अद्येत्यादि० समस्तपाप क्षयकामइदंहिरण्यंअग्निदैवतंगोत्रायशर्मणेतुभ्यमहंसंप्रददेनममेति ॥ मंत्रस्तु ॥ हिरण्यगर्भ गर्भस्थंहेमबीजंविभावसोः ॥ अनंतपुण्यफलदमतः शांतिंप्रयच्छमे ॥इतिहिरण्यदानं ॥ अथा ज्यदानं ॥ घृतंतुप्रस्थमितंदद्यात् ॥ विंशतिशेरकमितंभवति ॥ अद्येत्यादि० इदमाज्यंविष्णु दैवतं गोत्रायशर्मणे समस्तपापक्षयकामस्तुभ्यमहंसंप्रददेनममेति ॥ मंत्रस्तु ॥ कामधेनोः समुद्भूतंसर्वक्रतुषुसंस्थितं ॥ देवानामाज्यमाहारअतः शांतिंप्रयच्छमे ॥ इत्याज्यदानं ॥ अ थवस्त्रदानं ॥ सूक्ष्मवस्त्रद्वयंबहुमूल्यमष्टहस्तमितंदद्यात् ॥ अद्येत्या० समस्तपापक्षयकामइ

मेवार्हस्पत्येवासमीगोत्रायशर्मणे तुभ्यमहंसंप्रददेनममेति ॥ मंत्रस्तु ॥ शीतवातोष्णसंत्राणं
लज्जायारक्षणंपरं ॥ देहालंकरणंवस्त्रमतः शांतिंप्रयच्छमे ॥ इतिवस्त्रदानं ॥ अथधान्यदा
नं ॥ सार्द्धखारीद्वयंव्रीहयोदेयाः ॥ तच्चसार्द्धशतद्वयमणपरिमितंमणषट्कंचेति ॥ समस्तपा
पक्षयपूर्वकैहिकामुष्मिकशिवफलावाप्तिकामः प्रजापतिदैवत्यं इदममुकसंख्यंधान्यंगोत्रायश
र्मणे तुभ्यमहंसंप्रददेनममेति ॥ मंत्रस्तु ॥ सर्वदेवमयंधान्यंसर्वोत्पत्तिकरंमहत् ॥ प्राणिनांजीव
नोपायमतः शांतिंप्रयच्छमे ॥ इतिधान्यदानं ॥ अथगुडदानं ॥ गुडंपलषष्टिमितंदद्यात् ॥
अद्येत्यादि० ममसमस्तपापक्षयपूर्वकंगृहेलक्ष्म्याः स्थैर्यसिद्ध्यैइमंगुडंरसवर्यंसोमदैवतंसद
क्षिणं गोत्रायशर्मणेसुपूजिताय तुभ्यमहंसंप्रददेनममेति ॥ मंत्रस्तु ॥ गुडमिक्षुरसोद्भूतंमंत्रा
णांप्रणवोयथा ॥ दानेनानेनमेतस्यपरालक्ष्मीः स्थिरागृहे ॥ इतिगुडदानं ॥ अथरजतदानं ॥
पलत्रयमितंरौप्यंदद्यात् ॥ अद्येत्यादि० ममसमस्तपापक्षयपूर्वकशिवविष्णुपितृप्रीतिसिद्धये
इदंरजतंविष्णुदैवतंसदक्षिणं गोत्रायशर्मणेसुपूजिताय तुभ्यमहंसंप्रददेनममेति ॥ मंत्रस्तु ॥
प्रीतिर्यतः पितॄणांचविष्णुशंकरयोः सदा । शिवनेत्रोद्भवंरूप्यमतः शांतिंप्रयच्छमे ॥ इतिर
जतदानं ॥ अथलवणदानं ॥ लवणंसार्द्धखारिकंदद्यात् ॥ अद्येत्यादि० ममसमस्तपापक्षयपूर्वं

कशिवप्रीतिसिद्ध्येइदंलवणंसर्वरसोत्कृष्टंसोमदेवत्यंसदक्षिणंगोत्रायशर्मणे० अहंसंप्रददेनमम मे ति ॥ मंत्रस्तु ॥ यस्मादन्नरसाः सर्वेनोत्कृष्टालवणंविना ॥ शंभोः प्रीतिकरंयस्मादतः शांतिं प्रयच्छमे ॥ इतिलवणदानं ॥ ॥ इतिदशदानानि ॥ ॥ अथपंचधेनुदानानि ॥ ॥ तत्रादौपापापनोदधेनुदानं॥त्राह्ले । दानोपस्करास्तुगोदानोक्ताएव । अद्येत्यादि० ममात्मनोमनोवाक्कायकर्मभिराजन्मोपार्जितपापापनोदार्थंइमांकृष्णांपापापनोदधेनुंयथाशक्तिसोपस्करां रुद्रदेवत्यांगोत्रायशर्मणेसुपूजितायतुभ्यमहंसंप्रददेनममेति ॥ मंत्रस्तु ॥ आजन्मोपार्जितं पापंमनोवाक्कायकर्मभिः ॥ तत्सर्वंनाशमायातुपापधेनुप्रदानतः ॥ ततः सुवर्णदक्षिणांदद्यात् ॥ इतिपापापनोदधेनुदानं ॥ अथऋणापनोदधेनुदानं ॥ त्राह्ले । अद्येत्या० मम आजन्मोपार्जितैरैहिकामुष्मिकसमस्तऋणपातकछेदसिद्ध्यर्थंइमांसमस्तऋणापनोदरक्तधेनुं यथाशक्तिसोपस्करांरुद्रदेवत्यांगोत्रायशर्मणेसुपूजितायतुभ्यमहंसंप्रददेनममेति ॥ ततःसुवर्णदक्षिणांदद्यात् ॥ इतिऋणापनोदधेनुदानं ॥ अथप्रायश्चित्तधेनुदानं ॥ त्राह्ले । अद्येत्या० मयाजन्मप्रभृति अद्ययावदाचरितसमस्तपातकस्याकृतप्रायश्चित्तस्यामरणांतं पापापनोदसिद्ध्यर्थं प्रायश्चित्तत्वेनइमांकपिलांधेनुंयथाशक्तिसोपस्करांरुद्रदेवत्यांगोत्रायशर्मणेसुपूजि

तायतुभ्यमहंसंप्रददेनममेति ॥ मंत्रस्तु ॥ प्रायश्चित्तेसमुत्पन्नेनिष्कृतिर्नकृताकाचित् ॥ तस्य
पापस्यशुद्ध्यर्थंधेनुमेतांददामिते ॥ ततः सुवर्णदक्षिणांदद्यात्॥ इतिप्रायश्चित्तधेनुदानं ॥ अ
थवैतरणीधेनुदानं ॥ ब्रह्मवैवर्ते । यासावैतरणीनामयमद्वारेमहानदी ॥ शतयोजनविस्तीर्णा
पृथुत्वेसामहासरित् ॥ अगाधानंतरूपाचदृष्टमात्राभयप्रदा ॥ पतंतितत्रैवमर्त्याः क्रंदमानाः
सुदारुणं ॥ उष्णेवर्षासुशीतेचमारुतेचातितीक्ष्णके ॥ दातारंतारयेद्यस्मात्तस्माद्वैतरणी
स्मृता ॥ दानकालोपितत्रैवमदनरत्ने ॥ अयनेविषुवेपुण्येव्यतीपातेदिनक्षये ॥ अन्येषु
पुण्यकालेषुदीयतेदानमादरात् ॥ पाटलामथवाकृष्णांदद्याद्वैतरणींतुगां ॥ स्वर्णशृंगींरौ
प्यखुरांकांस्यपात्रोपदोहनाम् ॥ कृष्णवस्त्रयुगच्छन्नांसप्तधान्यसमन्वितां ॥ कार्पासद्रोणशि
खरेआसीनंहैमींयमप्रतिमांलोहदंडयुतांमहिषारूढांपाशहस्तांकृत्वाइक्षुदंडमयमुडुपंपट्टसू
त्रेण बध्वाउडुपेधेनुंकृत्वाछत्रोपानत्समायुक्तांवैतरणींगांमृत्युकालेवादद्यात् ॥ तद्यथा ॥ य
मयमद्वारस्थितवैतरण्याख्यनद्युत्तारणार्थं इमांकृष्णांगांसवत्सांयमप्रतिमायुक्तां कृष्णवस्त्रयुग
च्छन्नांसप्तधान्ययुतां रक्तमाल्याद्यलंकृतांस्वर्णशृंगाद्युपस्करोपेतांकार्पासद्रोणशिखरांसच्छ
त्रोपानत्कां रुद्रदेवत्यांगोत्रायशर्मणेसुपूजितायतुभ्यमहंसंप्रददेनमम इतितिलजलघृतयुतंगो

पुच्छंद्विजहस्तेदद्यात् ॥ मंत्रस्तु । यमद्वारपथेघोरेघोरावैतरणीनदी ॥ तांततुंकामोयच्छामि
कृष्णांवैतरणींतुगाम् इति ॥ ततः सुवर्णदक्षिणांदत्त्वाप्रार्थयेत् ॥ विष्णुरूपद्विजश्रेष्ठभूदे
वगतिपावन ॥ तर्तुवैतरणीमेनांकृष्णांगांप्रददाम्यहं ॥ ततः पुच्छंस्वकरेधृत्वानुव्रजेत्सप्त
पदानि ॥ धेनुप्रार्थनामंत्रस्तु धेनुकेत्वंप्रतीक्षस्वयमद्वारेमहापथे ॥ उत्तितीर्षुरहंदेविवैतरण्यै
नमोस्तुते ॥ इतिप्रणम्यभूयसींदक्षिणांदद्यात् ॥ कृष्णायाअभावेअन्यवर्णापिदेयागोरभावेद्र
व्यंदेयं । पित्रादेरशक्तौपुत्रादिर्दद्यात् । तत्रांत्यमंत्रेउत्तितीर्षुरयमितिपठेत् ॥ मध्यमेतंतुवैत
रणीमस्येति । प्रथमेतांततुमस्येति ॥ इतिवैतरणीदानम् ॥ अथउत्क्रांतिधेनुदानम् ॥ त्रा
ह्मे । उत्क्रांतिर्वैतरण्योश्चदशदानानिचैवहि ॥ प्रेतेपिकृत्वातंप्रेतंशवधर्मेणदाहयेत् इति ॥
यथा । योसुमूर्षुःपुरुषः स्वयंचेतनवेलायांश्रोत्रियंवेदपारगंब्राह्मणमाहूय अद्येत्यादि० मम
सुखेनप्राणोत्क्रमणप्रतिबंधकोक्तानिष्कृत्यनुक्तानिष्कृतिजनितसकलपापक्षयद्वारासुखेनप्राणो
त्क्रमणसिद्ध्यर्थमिमामुत्क्रांतिसंज्ञिकांधेनुंयथाशक्तिसोपस्करांरुद्रदेवत्यांगोत्रायशर्मणेसुपू
जितायतुभ्यमहंसंप्रददेनममेति ॥ मंत्रस्तु । असूक्रांतौप्रवृत्तस्यसुखोत्क्रमणसिद्धये ॥ तु
भ्यमेनांसंप्रददेधेनुमुत्क्रांतिसंज्ञिकाम् इति ॥ ततःसुवर्णदक्षिणांदद्यात् ॥ गोरभावेतुतत्स्व

रूपभूतंगोमूल्यंवादद्यात् ॥ पित्रादेरशक्तौतुपुत्रादिर्दद्यात् ॥ तत्रममेतिपदस्थानेपित्रादेरिति
वदेत् ॥ इत्युत्क्रांतिधेनुदानम् ॥ इयमेवमोक्षधेनुरितिकेचित् ॥ तद्यथा ॥ मोक्षदोवासुदेव
स्तुवेदशास्त्रेषुगीयते ॥ तत्प्रीतयेद्विजाग्र्यायमोक्षधेनुंददाम्यहम् ॥ इत्युक्त्वा अद्येत्यादिप
ठित्वा ममसमस्तपापक्षयपूर्वकसंसारमोक्षावाप्तिकामः श्रीपापापहमहाविष्णुप्रीतयेचइमांमो
क्षधेनुंयथाशक्तिसोपस्करांरुद्रदैवत्यांगोत्रायशर्मणेसुपूजितायतुभ्यमहंसंप्रददेनममेति ॥ मं
त्रस्तु । मोक्षंदेहिहृषीकेशमोक्षंदेहिजनार्दन ॥ मोक्षधेनुप्रदानेनममोक्षस्तुवेगतः इति ॥
ततःसुवर्णदक्षिणांदद्यात् ॥ गोरभावेतुपूर्वोक्तमनुसंधेयम् ॥ इतिमोक्षधेनुदानं ॥ अथमहि
षीदानं ॥ हेमाद्रौभविष्ये ॥ महिषीदानमाहात्म्यंकथयामियुधिष्ठिर ॥ पुण्यंपवित्रमायुष्यं
सर्वकामप्रदंतथा ॥ दानकालोपितत्रैव ॥ चंद्रसूर्यग्रहेकार्तिक्यांअयनेसितचतुर्दश्यांसंक्रांतौ
सर्वारिष्टनाशायचित्तप्राशस्त्यायदेया ॥ प्रथमप्रसूतांदोषवर्जितांदद्यात् ॥ तत्रादौय
मस्वरूपायैमहिष्यैनमइतिनत्वाप्रार्थयेत् ॥ महिषीब्रह्मपुत्रीचलक्ष्मीरूपेणसंस्थिता ॥ प्रा
र्थितासिमयादेवियममार्गेनिवारयेति ॥ तथा । महिषीयमरूपात्वंविश्वामित्रविनिर्मिते ॥ पू
जिताहरमेपापंसर्वदानफलप्रदे ॥ यथाशक्रस्याप्सरसोरूपेणमहिषीतथा ॥ सर्वभाग्यप्रदेदे

विदीर्घशृंगिनमोस्तुते इति ॥ अद्येत्यादि० ममदीर्घायुष्यैहिकामुष्मिकयज्ञयाजित्वपितृता
रणात्यंतशुभविंशतिधेनुदानसमफलावाप्तिसर्वदोत्तमफलपुत्रपौत्रचंद्रत्वसूर्यलोकनिवासमहा
राज्यावाप्तिकामश्च ममसर्वारिष्टनिवारणार्थं शनैश्चरजनितपीडाशांत्यर्थं इमां महिषीं सा
लंकृतांरक्तमाल्यवस्त्रावृतांस्वर्णशृंगीं रौप्यखुरां ताम्रदोहांहैमतिलकांसप्तधान्ययुतांघंटाभर
णांधेनूपस्करांयमदेवत्यांगोत्रायशर्मणेसुपूजितायतुभ्यमहंसंप्रददेनममेतिसकुशतिलजलंतद्द
स्तेदद्यात् ॥ विप्रोदेवस्यत्वेतिपठन् पृष्ठदेशंस्पृष्ट्वास्वस्तीतिप्रतिगृह्ययथाशाखंकामस्तुतिं
पठेत् ॥ दातातु इंद्रादिलोकपालानांयाराज्यमहिषीशुभा ॥ महिषीदानमाहात्म्यात्सा
स्तुमेसर्वकामदा ॥ धर्मराजस्यसाहाय्येयस्याः पुत्रः प्रतिष्ठितः ॥ महिषासुरस्यज
ननीयासास्तुवरदामम इति ॥ दत्त्वाप्रदक्षिणीकृत्यब्रह्मणेतांपयस्विनीम् इति । दक्षिणा
तुदशपंचत्रयः सुवर्णाः एकोवासुवर्णः अतिनिकृष्टोज्ञेयः ॥ ततोभूयसींदक्षिणांदत्त्वाकर्म
ईश्वरार्पणंकुर्यात् ॥ हेमाद्रौभविष्यपुराणे ॥ अनेनविधिनादत्त्वामहिषींद्विजपुंगवे ॥ सर्वा
न्कामानवाप्नोतिइहलोकेपरत्रचइति ॥ ब्राह्मणः सर्वकामस्तुक्षात्रियोजयकाम्यया ॥ धनका
मस्तुवैश्योवैशूद्रोभिलषितानियात् ॥ महिषदानमप्येवमेवज्ञेयम् ॥ इतिमहिषीदानम् ॥

अथमेषीदानं ॥ भविष्ये शृणुपार्थपरंदानंसर्वकल्मषनाशनम् ॥ यद्दत्त्वाविविधंपापंसद्योवि
लयमृच्छति ॥ अयनेविषुवेग्रहणद्वयेदुःस्वप्नदर्शने चित्तवित्तानुसारेकालेतीर्थेगृहेवाकार्य
म् ॥ शंकरंब्रह्माणंविष्णुंगौरींगायत्रींश्रीसहितांयथाशक्तिसुवर्णप्रतिमां कृत्वाशच्यास
हेंद्रंमहान्लोकपालांश्चकृत्वासंपूज्यतत्पश्चिमतः स्वगृह्येणाग्निंप्रतिष्ठाप्यस्थापितदेवतामंत्रै
स्तिलाज्यैरष्टोत्तरशतमष्टाविंशतिरष्टसंख्याकाहुतीर्वाहुत्वाततोमेषींद्विजंचवस्त्रालंकारादि
भिर्यथाविभवंसंपूज्य ॥ अद्येत्यादि० सर्वपापक्षयदुःस्वप्नसूचितारिष्टविनाशपुत्रपौत्रधनकी
र्तियशःकामइमांमेषींसुवर्णतिलकाद्यंकितांकौशेयपरिधानांसप्तधान्यसमायुक्तांपुष्पोपहारां
संमुखस्थापितलवणां ब्रह्मविष्णुशिवादिप्रतिमायुक्तामुक्तोपस्करांगोत्रायशर्मणेसुपूजिता
यतुभ्यमहंसंप्रददेनममेतिदत्त्वासुवर्णदक्षिणांदद्यात् ॥ मंत्रस्तु ॥ वाङ्मनःकायजनितंयत्कि
ञ्चिन्ममदुष्कृतं ॥ तत्सर्वंविलयंयातुत्वद्दानेनोपसंचितम् इति ॥ प्रतिमास्थापनंतिलकुंभे ॥
मेषीप्रत्यक्षासुवर्णनिर्मितांवा ॥ विप्रोदेवस्यत्वेतिशृंगेप्रतिगृह्ययथाशाखंकामस्तुतिंपठेत् ॥
प्रतिमर्हीतृविप्रसंभाषणंसुरावलोकनंचवर्जयेत् ॥ भविष्ये ॥ शतेनकारयेत्तांतुसुवर्णस्यप्र
यत्नतः ॥ यथाशक्त्याथवाकुर्याद्वित्तशाठ्यंनकारयेत् ॥ इतिमेषीदानं ॥ अथअजादानं ॥

श्वेतगंधंमधूत्कटंधूपंदद्यात् ॥ द्रोणद्वयतंडुलराशौस्थितंपूजयेत् ॥ मेपादाग्नेय्यांदिशिसमि
दाज्यतिलैर्होमः कार्यः॥ अथास्यप्रयोगः॥पुण्यकालेअद्येत्यादि० ममपूर्वकर्मविपाकोत्थत्रेता
ग्निनाशजनिताग्निमांद्यनिरासक्षिप्रजाठराग्निप्रबलत्वसिद्ध्यायुरारोग्यतासिद्ध्यर्थंमेपदानंकरि
ष्ये ॥ इतिसंकल्प्यमेपप्रतिमांमेपंवाप्रत्यक्षंसंस्थाप्य आग्नेय्यांस्वगृह्योक्तविधिनाग्निप्रतिष्ठा
प्यान्वाधाय त्रिरग्निप्रक्रमेणसमिदाज्यतिलैरष्टोत्तरशताष्टाविंशत्यष्टाष्टसंख्ययावाजुहुयात् ॥
एतैर्मंत्रैः समिदाज्यघृताक्ततिलाहुतिभिः ॐ अग्निर्मूर्धादि० तिस्वाहा अग्नयइ० ॥ १ ॥ ॐ
अग्नेनयसुपथा० स्वाहा अग्नयइ० ॥२॥ ॐ ॥ अग्निनाग्निः० स्यः स्वाहा अग्नय० ॥३॥ इति
त्रिभिर्मंत्रैर्विवक्षितसंख्यया समिदाज्यतिलैर्हुत्वा स्विष्टकृदादिप्रणीताविमोकांतं कृत्वाकुंभो
दकैर्यजमानोभिषिंचेदेतैर्मंत्रैः ॥ बौधायन ः ॥ आपोहिष्ठेत्यपितृचाहिरण्येतितृचेनच ॥ पव
मानानुवाकेनमार्जयेद्रोगिणंततः ॥ शन्नोवातानुवाकेनशांतिंचापिप्रकल्पयेत् ॥ तस्मैहुतवते
रोगीप्राङ्मुखायह्युदङ्मुखः ॥ सदक्षिणंपूजितायदत्त्वावाहनमुत्तमम् इति ॥ इमंसोपस्करमेपं
प्रत्यक्षं राजतं वा वरुणदैवतंसंकल्पोक्तफलसिद्ध्यर्थंतुभ्यमहंसंप्रददेनममेतिदत्त्वाप्रार्थयेत् ॥
बौधायनः ॥ देवानांयोमुखंहव्यवाहनः सर्वपूजितः ॥ तस्यत्वंवाहनंपूज्यंदेवेशैर्ब्रह्मर्षिभिः ॥

अग्निमांद्यंपूर्वकर्मविपाकोत्थंतुयन्मम ॥ तत्सर्वंनाशयक्षिप्रंजाठराग्निंप्रवर्द्धय इति ॥ विप्रस्तु
शृंगे देवस्यत्वेतिप्रतिगृह्ययथाशाखंकामस्तुतिंपठेत् ॥ ततः सुवर्णदक्षिणांदत्त्वायथाशक्तिभू
यसींदक्षिणांदत्त्वाब्राह्मणांश्चभोजयित्वासुहृद्युतोभुंजीतेति ॥ इतिमंदाग्निहरंमेषदानं ॥ अथ
दशाचलदानानि ॥ मात्स्ये ॥ प्रथमोधान्यशैलः स्याद्द्वितीयोलवणाचलः ॥ गुडाचल
स्तृतीयः स्याच्चतुर्थोहेमपर्वतः ॥ तिलशैलः पंचमः स्यात्षष्ठः कार्पासपर्वतः ॥ सप्तमो
घृतशैलः स्यादष्टमोरत्नपर्वतः ॥ नवमोराजतः शैलोदशमः शर्कराचलइति ॥ कालमाह
मात्स्ये ॥ अयनेविषुवेचैवव्यतीपातेदिनक्षये ॥ शुक्लपक्षेतृतीयायामुपरागेशशिक्षये ॥ वि
वाहोत्सवयज्ञेषुद्वादश्यामथवापुनः ॥ शुक्लायांपंचदश्यांवापुण्यर्क्षेवाविधानतः ॥ धान्यशै
लादयोदेयायथाश्रद्धंविधानतः ॥ तीर्थेवायतनेवापिगोष्ठेवाथगवांगणे ॥ तत्रचतुरस्रंद्वादशह
स्तंमंडपमुदङ्मुखंप्राङ्मुखंवाप्राच्यामुदीच्यांवाएकमेवद्वारंनचत्वारि तोरणमप्येकमेव ॥ मं
डलंगोमयेनोपलिप्यकुशानास्तीर्य तन्मध्येपर्वतंकुर्याद्विष्कंभैः पर्वतैर्युतं ॥ धान्यद्रोणसह
स्रेणभवेद्गिरिरिहोत्तमः ॥ मध्यमः पंचशतिकःकनिष्ठःस्यात्त्रिभिःशतैः ॥ मेरुर्व्रीहिमयोमहान्
मध्येतदुपरिमंदारपारिजातकल्पवृक्षादयोहेममयास्त्रयः मध्येकल्पतरुर्मंदारपारिजातौद

क्षिणोत्तरयोः पूर्वपश्चिमयोर्हरिचंदनसंतानौ मुक्ताफलवज्रगोमेदकपुष्परागगारुत्मतनीलरत्न
वैडूर्यसरोजरागरत्नानिद्वंद्वशःपूर्वादिदिगवस्थितरजतशृंगेषुचतुर्षुनिवेश्यानि ॥ मंदारः श्री
खंडखंडैरभितः प्रवाललतान्वितः शुक्तिशिलातलः स्यात् ॥ शर्कराचलेतुहरिचंदनसंतानौ
आवश्यकौ । तत्रपूर्वादिदिक्षुब्रह्मविष्णुरुद्रसूर्यप्रतिमाः ॥ पक्षिसंघान्मुनिसंघांश्चहैमान्प्रागा
दिदिक्चतुष्टयेक्रमेण पूर्वोक्तमुक्ताफलहीरकैर्गोमेदपुष्परागैर्मरकतनीलैर्वैडूर्यपद्मरागैः समसं
ख्याकैर्भूषितंरौप्यशृंगचतुष्कंतद्बहिर्दिगष्टकेरौप्यामिंद्रादिलोकपालप्रतिमाष्टकंसमंताच्छ्रीखं
डैर्लतानांस्थानेप्रवालशिलानांशक्तीः प्रागादिषुमेघानांश्वेतपीतकर्बुररक्तवस्त्राणि वंशानामिक्षू
न् जलस्यघृतंगंधपुष्पनानाफलानिचपरितः संस्थाप्यपंचवर्णवितानकंचोपरिबध्नीयात्॥ ततो
यवैर्मेरोः षोडशांशेनप्राच्यांमंदारंतदुपरिनररूपंगणत्रयंकदंबंचसौवर्णंकदंबमूलेहैमः कामदेवः
अरुणोदसरःस्थानेदुग्धपूर्णरौप्यपात्रं रौप्यंचैत्ररथाख्यंवनंगंधपुष्पफलवस्त्राणिचस्थापयेत्॥
याम्येमेरुषोडशांशेनगोधूममयंगंधमादनंतदुपरिसौवर्णंजंबूवृक्षंतन्मूलेसौवर्णमुदङ्मुखंधनदंमा
नससरःस्थानेसघृतंरौप्यपात्रंरौप्यंगंधवाख्यवनंनानाफलवस्त्रमाल्यानिचस्थापयेत्।पश्चिमेमेरु
षोडशांशतिलमयंविपुलाख्यंपर्वतंतदुपरिसौवर्णंपिप्पलं तन्मूलेप्राङ्मुखींसौवर्णहंसप्रतिमांसि

उत्तरेमेरु
तोदसरः स्थानेदधिपूर्णरौप्यपात्रंरौप्यंवैभ्राजंवनंवस्त्रफलमाल्यानिचस्थापयेत् ॥ उत्तरेमेरु
षोडशांशमितमाषैः सुपार्श्वपर्वतंतदुपरिसौवर्णवटंतन्मूलेदक्षिणाभिमुखींसवत्सांसुवर्णधेनुंभ
द्रसरः स्थाने मधुपूर्णरौप्यपात्रं रौप्यंसावित्रंवनंवस्त्रफलमाल्यानिचस्थापयेत् ॥ एवंवक्ष्यमाण
पर्वतेष्वपिमेरुद्रव्यचतुर्थांशेनलवणादिद्रव्येणप्रागादिषुविष्कंभपर्वताज्ञेयाः ॥ तत्राचार्यस्त्वे
कऋत्विजश्चत्वारः ॥ प्राच्यामेकमेवकुंडमितितत्रैवजुहुयुः ॥अथयजमानः कृतनित्यक्रियः पु
ण्यकालेऽद्येत्यादि० अप्सरोगंधर्वयुतविमानकरणकस्वर्गलोकगमनसाग्रमन्वंतरकालदेवलो
कनिवासोत्तरभूलोकराजराजत्वकामईश्वरप्रीतिकामोवाधान्यपर्वतदानंकरिष्ये इतिसंक
ल्प्यतदंगत्वेनगणेशपूजननांदीश्राद्धानिचकृत्वाआचार्यमृत्विजश्चवृत्वामधुपर्कादिनासंपूज्य
मंडपपूजनाद्याचार्यनियोगांतंकुर्यात् ॥ ततआचार्योनवग्रहस्थापनादिकुंडसमीपस्थितकल
शस्थापनांतंकुर्यात् ॥ अथऋत्विजः प्राक्कुंडेग्रहादिद्वात्रिंशद्देवताभ्यस्तत्तन्मंत्रैर्घृताक्ततिलैः
पृथक्यवघृताभ्यांकुशैश्चेतित्रिभिः साधनैः प्रत्येकमष्टवारंहुत्वादशलोकपालेभ्योऽष्टवसुभ्यः
एकादशरुद्रेभ्यो द्वादशादित्येभ्यश्च प्रत्येकमष्टाष्टसंख्ययासमिच्चर्वाज्याहुतिभिर्जुहुयुः ॥ ततः
पुरुषसूक्तेनब्रह्मविष्णुरुद्रेभ्यः समित्तिलैर्वासूर्यकामदेवधनदहंसकामधेनुभ्यस्तिलैर्घृतेनवाअ

ष्टोत्तरशतंजुहुयुः ॥ ततश्चतुःपंचाशद्देवताभ्यस्तिलैर्घृतेनच॥ततोयजमानोमेरुमवरुह्यपूजयेत्
॥ तत्रमंत्रः ॥ त्वंसर्वदेवगणधामनिधिर्विरुद्धमस्मद्गृहेष्वमरपर्वतनाशयाशु ॥ क्षेमंविधत्स्वकुरु
शांतिमनुत्तमांनःसंपूजितः परमपाहिसनातनस्त्वं ॥ त्वमेवभगवानीशोब्रह्माविष्णुर्दिवाकरः
॥ मूर्तामूर्तपरंबीजमतः शांतिंकुरुप्रभो ॥ यस्मात्त्वंलोकपालानांविश्वमूर्तेश्चमंदिरं ॥ रुद्रा
दित्यवसूनांचततः शांतिंप्रयच्छमे ॥ यस्मादशून्यममरैर्नारीभिश्चशिरस्तव ॥ तस्मान्मामु
द्धराशेषदुःखसंसारसागरात् ॥ मंदरस्यतु ॥ यस्माच्चैत्ररथेनत्वंभद्राश्वप्रमुखेन
च ॥ शोभसेमंदरक्षिप्रमलंपुष्टिकरोभव ॥ गंधमादनस्यतु ॥ यस्माच्चूडामणिर्जंबुद्वीपत्वं
गंधमादन ॥ गंधर्ववनशोभावानतः कीर्तिर्दृढास्तुमे ॥ विपुलस्यतु ॥ यस्मात्त्वंकेतुमालेनवै
भ्राजेनवनेनच ॥ हिरण्मयाश्वत्थशिरास्तथापुष्टिर्दृढास्तुमे ॥ सुपार्श्वस्यस्तु ॥ उत्तरैः
कुरुभिर्यस्मात्सावित्रेणवनेनच ॥ सुपार्श्वशोभसेनित्यमतः श्रीरक्षयास्तुमे ॥ ततः सर्वेजाग
रणेकृतेप्रातः स्नात्वाकृतनित्यक्रियाः कुंडसमीपस्थकलशजलेनसपरिवारंयजमानमभिषिंचे
युः ॥ ततोयजमानोगृहीतकुसुमोमेरुंप्रदक्षिणीकृत्योपतिष्ठेत् ॥ अन्नंब्रह्मरसः प्रोक्तमन्नेप्राणाः
प्रतिष्ठिताः ॥ अन्नाद्भवंतिभूतानिजगदन्नेनवर्द्धते ॥ अन्नमेवयतोलक्ष्मीरन्नमेवजनार्दनः धा ॥

न्यपर्वतरूपेणपाहितस्मान्नमोनमः ॥ इत्युपस्थायपुष्पांजलिंप्रक्षिप्यनमस्कृत्यप्राङ्मुखउप
विश्योदङ्मुखेभ्योगुर्वादिभ्यःक्रमेणगिरीन्दद्यात् ॥ अद्येत्यादि० अप्सरोगंधर्वयुतविमानकर
णकस्वर्गलोकगमनानंतरंसाग्रमन्वंतरशतावधिसमयदेवलोकनिवासोत्तरभूलोकराजराजत्व
प्राप्तिकाम इमंधान्यमयमेरुं सौवर्णमंदरादिवृक्षपंचकसौवर्णब्रह्मविष्णुरुद्रार्कादिप्रतिमायुक्तंमु
क्ताहीरकादिभूपितरौप्यमयशृंगचतुष्कोपशोभितं रूप्यमयेंद्रादिदशलोकपालप्रतिमायुतंरौ
प्यमयनितंबान्वितं इक्षुवंशमितकंदरदिक्चतुष्टयस्थापितरौप्यपात्रस्थितंघृतोदकप्रस्रवणं
दिक्चतुष्टयस्थापितकर्पूररक्तवस्त्राम्बुदधरंनानाफलमाल्यवितानाद्युपकरणसहितंगोत्रायशर्म
णेसालंकृतायगुरवेतुभ्यमहंसंप्रददेनममेतिदद्यात् चतुर्विंशतिधेनुपक्षेगावोऽष्टौगुरवे चतस्रश्चतु
र्ऋत्विग्भ्यः ॥ दशपक्षेतुगुरवेपट्ऋत्विग्भ्यः एकैका ॥ एकधेनुपक्षेगुरवेएकामेवकपिलां ॥
ऋत्विग्भ्यः सुवर्णदक्षिणांदद्यादितिमदनरत्नादयः ॥ एवंपूर्वस्थितमंदराख्यंविष्कंभंसप्रतिमं
सोपस्करंगोत्रायशर्मणेऋत्विजेतुभ्यमहंसम्प्रददेनममेतिदद्यात् ॥एवमेवदक्षिणस्थंगोधूममयंगं
धमादनपर्वतं तथापश्चिमस्थंतिलमयंविपुलाख्यंपर्वतं॥ ततउत्तरदिक्स्थंमाषमयंसुपार्श्वाख्य
पर्वतंऋत्विग्भ्योदद्यात् ॥ लवणाचलादिदानप्रयोगेषुधान्यपदस्थानेलवणादिपदंप्रक्षेप्यम् ॥

तत्तत्फलानितुतत्रतत्रवक्ष्यामः । ततोग्रहवेद्यांयजमानोदेवताः संपूज्याहितदेवताश्चसंपूज्य
नमस्कुर्यात् ॥ गुरुस्तासांदेवतानांविसर्जनंकुर्यात् ॥ ततोयजमानोमंडपग्रहपीठंप्रतिमो
पस्करादिसर्वंगुरवेसदक्षिणंप्रतिपाद्यभूयसींदक्षिणांदत्त्वा प्रमादा० यस्यस्मृत्येतिचविष्णुं
स्मृत्वाकर्मेश्वरार्पणंकृत्वाब्राह्मणान्भोजयित्वाशिषोगृहीत्वास्वयंसुहृद्युक्तोभुंजीतेति ॥
इतिधान्यमेरुपर्वतसाधारणदानप्रयोगः ॥ अथलवणाचलदानं ॥ पाद्मे ॥ उत्तमःषोडशद्रो
णः कर्तव्योलवणाचलः ॥ मध्यमः स्यात्तदर्धेनचतुर्भिरधमः स्मृतः ॥ वित्तहीनोयथाश
क्त्याद्रोणादूर्ध्वंतुकारयेत् ॥ चतुर्थांशेनविष्कंभपर्वतान्कारयेत्पृथक् ॥ अयंन्यायः सर्वविष्कं
भपर्वतेषुज्ञेयइतिमदनः ॥ विधानंतुपूर्ववत् ॥ हेमतरून्लोकपालान्कामदेवादीन्पूर्ववत् त
थैवसंपूज्यप्रार्थयेत् ॥ मंत्रास्तु ॥ सौभाग्यरससंभूतोयतोऽयंलवणोरसः ॥ तदात्मकत्वेन
चमांपाहिपापान्नमोनमः ॥ यस्मादन्नरसाःसर्वेनोत्कृष्टालवणंविना ॥ प्रियंचशिवयोर्नित्यंत
स्माच्छांतिंप्रयच्छमे ॥ विष्णुदेहसमुद्भूतंयस्मादारोग्यवर्धनं ॥ तस्मात्पर्वतरूपेणपाहिसंसार
सागरात् ॥ अद्येत्यादि० कल्पपर्यंतंउमालोकप्राप्त्यनंतरंपरमगतिप्राप्तिकामईश्वरप्राप्तिका
मोवालवणाचलदानंकरिष्ये इतिसंकल्पः ॥ अयमेवविशेषोऽन्यत्सर्वंपूर्ववत् ॥ इतिलवणा

चलदानं ॥ अथगुडाचलदानं पाद्मे ॥ अथातःसंप्रवक्ष्यामिगुडपर्वतमुत्तमं ॥ यत्प्रदानान्न
तःस्वर्गंप्राप्नोतिसुरपूजितं ॥ उत्तमोदशभिर्भारैर्मध्यमः पंचभिर्मतः ॥ त्रिभिर्भारैः कनिष्ठः
स्यात्तदर्धेनाल्पवित्तवान्॥ तुलास्त्रियांपलशतंभारः स्याद्विंशतिस्तुला इत्यमरः ॥ विधिस्तु
पूर्ववत् ॥ प्रार्थनामंत्रास्तु ॥ यथादेवेषुविश्वात्माप्रवरश्चजनार्दनः ॥ सामवेदस्तुवेदानां
महादेवस्तुयोगिनां ॥ प्रणवः सर्वमंत्राणांनारीणांपार्वतीयथा ॥ तथारसानांप्रवरः सदैवेक्षु
रसोमतः ॥ ममतस्मात्परांलक्ष्मींददस्वगुडसर्वदा ॥ यस्मात्सौभाग्यदायिन्या
भ्रातात्वंगुडपर्वत ॥ निवासश्चापिपार्वत्यास्तस्मान्मांपाहिसर्वदा ॥ दानवाक्यंतु ॥
अद्येत्यादि॰सकलपापक्षयोत्तरगंधर्वपूज्यमानत्वपूर्वकल्पशतावधिगौरीलोकप्राप्त्यनंतरंसप
त्नापराजितायुरारोग्यपूर्वकसप्तद्वीपाधिपतित्वकामईश्वरप्रीतिकामोवेतिसंकल्पेदानेचविशेषो
न्यत्सर्वंपूर्ववदिति ॥ इतिगुडाचलदानं ॥ अथसुवर्णाचलदानं ॥ पाद्मे ॥ उत्तमः पलसाहस्रो
मध्यमःपंचभिःशतैः ॥ तदर्धेनाधमस्तद्वदल्पवित्तोऽपिशक्तितः ॥ अल्पवित्तःपलादूर्ध्वं
कुर्यादिति । धान्यपर्वतवद्विधानं ॥ पर्वतंसंपूज्यप्रार्थयेत् ॥ मंत्रोतु ॥ नमस्ते
ब्रह्मगर्भायब्रह्मबीजायवैनमः ॥ यस्मादनंतफलदस्तस्मात्पाहिशिलोच्चय ॥ यस्मा

इति ॥ दान
दग्नेरपत्यंत्वंयस्मात्तेजोजगत्पतेः ॥ हेमपर्वतरूपेण तस्मात्पाहिसदामम इति ॥ दान
वाक्यं । अद्येत्यादि॰ सकलपापक्षयोत्तरशतकल्पावधिआनंदकारकब्रह्मलोकभोगानंतरप
रमपदप्राप्तिकामइतिसंकल्पेदानवाक्येचविशेषः । अत्रसर्वंगुर्वादिभ्यएवदेयं । तदल्पद्रव्यवि
षयं । बहुद्रव्येषुतुलापुरुषदानवदर्द्धंचतुर्थांशोवागुरवेदत्वाऽन्यद्विप्रेभ्योदेयमितिहेमाद्रिः ॥
इतिसुवर्णाचलदानं ॥ अथतिलाचलदानं ॥ पाद्मे ॥ उत्तमोदशभिर्द्रोणैः पंचभिर्मध्यमोमतः
त्रिभिःकनिष्ठोराजेंद्रतिलशैलः प्रकीर्तितः इति ॥ वृक्षविष्कंभादितुसर्वंपूर्ववत् ॥ मंत्रास्तु ॥
यस्मान्मधुवनेविष्णोर्देहस्वेदसमुद्भवाः ॥ तिलाःकुशाश्चमाषाश्चतस्माच्छन्नोभवत्विह ॥ ह
व्यकव्येषुयस्माच्चतिलैरेवाभिरक्षणं ॥ भवादुद्धरशैलेंद्रतिलाचलनमोस्तुते ॥ दानवाक्यंतु ।
अद्येत्यादि॰ सकलपापक्षयदीर्घायुष्यपुत्रपौत्रसमन्वितभोगानंतरपितृदेवगंधर्वलोकपूज्यमान
त्वपूर्वकद्युलोकगमनानंतरमक्षय्यवैष्णवपदप्राप्तिकामइतिसंकल्पेदानवाक्येचविशेषोन्यत्सर्वं
पूर्ववत् ॥ इतितिलाचलदानं ॥ अथार्द्धोदयव्रतेतिलपर्वतदानं ॥ स्कांदे ॥ पूर्वाह्णेसंगमेस्ना
त्वाशुचिर्भूत्वासमाहितः ॥ सर्वपापविशुद्ध्यर्थंनियमस्थोभवेन्नरः ॥ नियममंत्रस्तु ॥ त्रि
दैवत्यव्रतंदेवाः करिष्येभुक्तिमुक्तिदं॥भवंतुसन्निधौमेऽत्रत्रयोदेवास्त्रयोग्नयः ॥इति ॥तथाब्रह्म

विष्णुमहेशानां सौवर्णीः पलसंख्यया॥प्रतिमास्तुप्रकर्तव्यास्तदर्धेनद्विजोत्तम॥साग्रंशतत्रयंशो भोद्रोणानांतिलपर्वतः॥कर्तव्यःपर्वतोविष्णोर्ब्रह्मणःपूर्वसंख्यया॥ शय्यात्रयंततःकुर्या दुपस्कुरोत्समन्वितम्॥संपूज्यविप्रवर्येभ्योदत्वेप्सितमवाप्नुयात्॥इति॥अथास्यदानप्रयोगः॥यजमानः कृतनित्यक्रियः पुण्यकालेतीर्थादौस्नात्वाचम्य अद्येत्यादि० ममेप्सितफलावाप्तयेमेरुदानसमफलावाप्तयेवाब्दोदयेतिलपर्वतदानंकरिष्येइतिसंकल्पः॥ वेदपारगान्ब्राह्मणान्वृत्वा यथाविभवंवस्त्रालंकारादिभिः संपूज्य ततस्तिलपर्वतेब्रह्मादीनांप्रतिमाः स्वर्णमयाः संस्थाप्य षोडशोपचारैः संपूज्यब्रह्मादीनामंगपूजांकुर्यात्॥ तद्यथा॥ नमोविश्वसृजेतुभ्यंसत्यायपरमात्मने॥ देवायदेवपतयेयज्ञानांपतयेनमः॥ ॐ॥ब्रह्मणेनमः पादौपूजयामि इत्यक्षतगंधपुष्पाणिच प्रक्षिपेत्॥ ॐ हिरण्यगर्भायनमः ऊरूपूज० ॐ परमात्मने० जानुनीपू० ॐ वेधसेनमः जंघेपू० ॐ पद्मोद्भवाय० गुह्यंपूज० ॐ हंसवाहना० कटीपू० ॐ शतानंदाय० वक्षःपू० ॐ सावित्रीपतयेन० बाहूपू० ॐ ऋग्वेदाय० पूर्ववक्त्रंपू० ॐ यजुर्वेदाय० दक्षिणवक्त्रंपू० ॐ सामवेदाय० पश्चिमवक्त्रंपू० ॐ अथर्ववेदाय० उत्तरवक्त्रंपू० ॐ चतुर्वक्त्राय० वक्त्राणिपू० ॐ हंसाय० नेत्राणिपू० ॐ कमलासनाय० शिरांसिपू० ॐ लोके

शाय॰ सर्वांगंपू॰ ततोलोकपालान्परितस्तत्तन्मंत्रैः पूजयेत् ॥ ततोविष्णवंगपूजा ॥ हिरण्य
रूपपुरुपप्रधानाव्यक्तरूपधृक् ॥ प्रसीदसुमुखानंतपूजांस्वीकुरुमत्कृतां इतिप्रार्थ्यपूजयेत् ।
ॐ अनंताय॰ पादौपू॰ ॐ विश्वरूपवते॰ ऊरूपू॰ ॐ मुकुंदाय॰ जानुनीपू॰ ॐ गोविंदा
य॰ जंघेपू॰ ॐ प्रद्युम्नाय॰ गुह्यंपू॰ ॐ पद्मनाभाय॰ नाभिंपू॰ ॐ लंबोदराय॰ उदरंपू॰ ॐ
कौस्तुभवक्षसेन॰ वक्षः पू॰ ॐ चतुर्भुजाय॰ बाहूपू॰ ॐ विश्वमुखाय॰ मुखंपू॰ ॐ सहस्र
शिरसेन॰ शिरांसिपू॰ ॐ सर्वेश्वराय॰ सर्वांगंपू॰ ॥ ततः शिवांगपूजा ॥ आदित्यचं
द्रनयनदिग्वासोदैत्यसूदन ॥ पूजांदत्तांमयाभक्त्यागृहाणकरुणाकर इति ॥ तथा । महे
श्वरमहेशाननमस्तेत्रिपुरांतक ॥ जीमूतकेशायनमोनमस्तेवृषभध्वजेति ॥ आद्यमं
त्रेणसंप्रार्थ्य द्वितीयेननत्वापूजयेत् ॥ ॐ ईशाना॰ पादौपू॰ ॐ शंकराय॰
ऊरूप॰ ॐ उमाकांताय॰ गुह्यंपू॰ ॐ नीललोहिताय॰ नाभिंपू॰ ॐ कृत्तिवाससे॰ उद
रंपू॰ नागयज्ञोपवीतिने॰ बाहूपू॰ ॐ पंचवक्राय॰ वक्त्राणिपू॰ ॐ त्रिलोचनाय॰ नेत्रा
णिपू॰ ॐ रुद्राय॰ शिरः पू॰ ॐ विश्वेश्वराय॰ सर्वांगंपू॰ ॥ इत्यंगपूजा॥ ततः पंचामृता
द्युपचाराः । पीठत्रयंकमंडलुंश्वेतवस्त्रयुगंब्रह्मणेपीतांबरद्वयंविष्णवेलोहितवस्त्रयुगंशंकरायक

मलैस्तुलसीपत्रैर्बिल्वपत्रैश्चक्रमेणसंपूज्य । ततोब्रह्मविष्णुशिवानांनाममंत्रेणक्रमेणाष्टोत्तरश
तंतिलैर्घृताक्तैर्हुत्वागामेकांदद्यात् ॥ ततस्तिलपर्वतंप्रतिमात्रयंशय्यात्रयंचदद्यात् ॥ संक
ल्पोक्तफलंसंकीर्त्य गोत्रायशर्मणेसुपूजितायतुभ्यमहंसंप्रददेनममेति ॥ मंत्रौतु ॥ यस्मान्म
धुवनेविष्णोर्देहस्वेदसमुद्भवाः ॥ तिलाः कुशाश्चमाषाश्च तस्माच्छंनोभवत्विह ॥ हव्यकव्ये
पुयस्माच्चतिलैरेवाभिरक्षणं ॥ भवादुद्धरशैलेंद्रतिलाचलनमोस्तुते ॥ अन्यत्सर्वंतिलाचलदान
वत्कुर्यात् ॥ यत्किंचिद्दीयतेदानंमेरुतुल्यंतुतद्भवेत् इति ॥ तथाचात्रदानविशेषोनिर्णयामृते
स्कांदे ॥ चतुः षष्टिपलंमुख्यममत्रंतत्रकारयेत् ॥ तत्रअर्धोदये ॥ चत्वारिंशत्पलंवापिपंच
विंशतिमेववा ॥ तत्तुकांस्यमयमुक्तंतत्रैव ॥ एवंसुघटितंकार्यंकांस्यभाजनमुत्तमम् इति ॥
स्कांदे ॥ निधायपायसंतत्रपद्ममष्टदलंलिखेत् ॥ पद्मस्वकर्णिकायांतुकर्षमात्रंसुवर्णकं ॥ तद
भावेतदर्धंवातदर्धंवापिकारयेत् ॥ कृत्वातुतंडुलैः शुक्लैः पद्ममष्टदलंभुवि ॥ अमत्रंस्थापयेत्त
त्रब्रह्मविष्णुशिवात्मकं ॥ तेषांपूजाततः कार्याश्वेतमाल्यैस्तुशोभनैः ॥ वस्त्रादिभिरलंकृत्य
ब्राह्मणायनिवेदयेत् इति ॥ अद्येत्यादि० ससमुद्रसमग्रसम्यक्पृथ्वीदानसमफलावाप्तिकामो
गोत्रायशर्मणेसालंकृतायइदंपायसपूरितकांस्यपात्रं अष्टदलपद्मस्थितंससुवर्णवस्त्रादिभिरलं

कृतंब्रह्मविष्णुशिवात्मकंविष्णुदैवत्यंतुभ्यमहंसंप्रददेनममेति ।मंत्रस्तु॥सुवर्णपायसामत्रंयस्मा
देतत्त्रयीमयम्॥आवयोस्तारकंयस्मात्तद्गृहाणद्विजोत्तमेति॥कांस्यपात्रदानफलमुक्तंस्कांदे॥स
मुद्रमेखलांपृथ्वींसम्यग्दत्वाचयत्फलं॥तत्फलंलभतेमर्त्यःकृत्वादानममन्त्रकम् इति॥अमंत्रंपा
त्रं ॥ इत्यर्धोदयेतिलाचलदानंकांस्यपात्रदानंच ॥ अथकार्पासाचलदानं ॥ कार्पासपर्वतस्त
द्विंशद्भारैरिहोदितः ॥ दशभिर्मध्यमः प्रोक्तः कनिष्ठः पंचभिः स्मृतः ॥ अल्पधनोभारैरे
केनवाकुर्यात् ॥ विधिस्तुधान्यपर्वतवत् ॥ दानंतुप्रभातायांशर्वर्यांअरुणोदयेसूर्योदयात्प्राक्
नाडिकाचतुष्टयमध्येइत्यर्थः ॥ अद्येत्यादि० सकलपापक्षयोत्तराकल्परुद्रलोकनिवासानंतरं
भूलोकराज्यकामइतिसंकल्पेदानवाक्येचवदेत् ॥ मंत्रस्तु ॥ त्वमेवावरणंयस्माल्लोकानामिह
सर्वदा॥कार्पासाचलतस्मात्त्वमघौघध्वंसनोभवेति॥इतिकार्पासाचलदानं॥अथघृताचलदानं॥
पाद्मे । विंशत्याघृतकुंभानामुत्तमः स्याद्घृताचलः॥मध्यमस्तुतदर्धेनतदर्धेनाधमः स्मृतइति॥
अल्पवित्तस्तुद्वाभ्यांवापिकुर्वीतेति ॥ विष्कंभादिपर्वताश्चतुर्थांशेनकार्याः ॥ कुंभः पलसह
स्रात्मकइत्युक्तंदानविवेके ॥ घृतकुंभः पात्रएव । शालितंडुलपूर्णपात्राणिकुंभानामुपरिनिवे
शयेत् । अहतशुक्लवस्त्रैरावेष्टयेत् । इक्षुदंडफलान्वितः । अन्यत्सर्वंधान्यपर्वतवद्बोध्यं । उद

यात्प्राक्घटिकाचतुष्टयमध्येदद्यात् ॥ अद्येत्या० सकलपापक्षयपूर्वकहंससारसयुक्तकिंकिणी
जालमाल्यर्कवर्णविमानकरणकशंकरलोकगमनपूर्वकसिद्धचारणविद्याधरार्चितत्वविशिष्टपि
तृसहिताभूतसंप्लवविचरणकामइतिसंकल्पेदानवाक्येचवक्तव्यम् ॥मंत्रौतु॥ संयोगाद्घृतमुत्प
न्नंयस्मादमृततेजसः ॥ तस्माद्घृतार्च्चविश्वात्माप्रीयतांममशंकरः॥यच्चतेजोमयंब्रह्मघृतेनित्यं
प्रतिष्ठितं ॥ घृतपर्वतरूपेणतस्मान्नः पाहिभूधरेति ॥ इतिघृताचलदानं ॥ अथरत्नाचलदा
नं ॥ पाद्मे ॥ अथातः संप्रवक्ष्यामिरत्नाचलमनुत्तमं ॥ मुक्ताफलसहस्रेणपर्वतः स्यादिहोत्त
मः ॥ मध्यमः पंचशतिकस्त्रिशताचाधमः स्मृतः ॥ चतुर्थांशेनविष्कंभादयः ॥ वज्रगोमेदैः
पूर्वेमंदरः इंद्रनीलैः पद्मरागयुतैर्दक्षिणेगंधमादनः । वैदूर्यविद्रुमैः पश्चाद्विपुलाचलः । ससौ
वर्णैःपद्मरागैः सुपार्श्वउत्तरे इति ॥ दानवाक्यंतु अद्येत्यादि० अनेकजन्मकृतब्रह्महत्यादि
पापक्षयोत्तरामरेश्वरपूजितत्वपूर्वकसाग्रकल्पशतावधिविष्णुलोकनिवासानन्तरमायुरारोग्य
रूपगुणोपेतसप्तद्वीपाधिपत्यकामइतिसंकल्पेदानवाक्येचवक्तव्यं ॥ मंत्रौतु॥यथादेवगणाः स
र्वेरत्नेष्वेवव्यवस्थिताः ॥ त्वंचरत्नमयोनित्यमतः पाहिसदाचल ॥ यस्माद्रत्नप्रसादेनवृष्टिं
प्रकुरुतेहरिः ॥ रत्नाचलप्रसादेनतस्मान्नः पाहिपर्वत इति ॥ अन्यत्सर्वंधान्यपर्वतवत् ॥ इ

तिरत्नाचलदानं ॥ अथरौप्याचलदानं ॥ पाद्मे ॥ दशभिः पलसाहस्रैरुत्तमोरजताचलः ॥
पंचभिर्मध्यमः प्रोक्तस्तदर्धेनाधमः स्मृतः ॥ अत्यशक्तौविंशतिपलादूर्ध्वंकुर्यात् ॥ विष्कं
भादयस्तुतुरीयांशेनेति ॥ अन्यत्सर्वंधान्यपर्वतवत् ॥ दानवाक्यंतु अद्येत्यादि ० सकल
पापक्षयपूर्वकदशसाहस्रगोदानसमफलावाप्तिपूर्वकगंधर्वाप्सरोगणपूज्यमानत्वविशिष्टवैभवेन
यावदाभूतसंप्लवसोमलोकनिवासकामइतिसंकल्पेदानवाक्येचवक्तव्यं ॥ मंत्रस्तु ॥ पितॄणांव
ल्लभंयस्माद्धरींद्रोः शंकरस्यतु ॥ रजतंपातुतस्मान्नःशोकसंसारसागरात् इति ॥ इतिरौप्या
चलदानं ॥ अथशर्कराचलदानं ॥ पाद्मे ॥ अष्टभिः शर्कराभारैरुत्तमःस्यान्महाचलः चतु
र्भिर्मध्यमः प्रोक्तस्तदर्धेनाधमः स्मृतः॥ भारेणह्यल्पवित्तोपिभारार्द्धेनापिवापुनः ॥ चतुर्थांशे
नविष्कंभादयः। मंदारपारिजातकल्पवृक्षादयोहैमाएवपूर्ववत् । पूर्वपश्चिमेहरिचंदनसंतानौ।
प्रत्यङ्मुखःकामदेवोमंदरे । धनदउदङ्मुखोगंधमादने । प्राङ्मुखावेदमूर्तिर्विपुलाचले । है
मीसुपार्श्वेदक्षिणामुखीसुरभिः । अन्यत्सर्वंधान्यपर्वतवत् ॥ अद्येत्यादि० सकलपापक्षयानं
तरकल्पशतावधिविष्णुलोकनिवासानंतरंसप्तद्वीपाधिपत्योत्तरंजन्मायुतं यावदविच्छिन्नायुरा
रोग्यकामइतिसंकल्पेदानवाक्येचवक्तव्यं ॥ मंत्रस्तु॥आरोग्यामृतसारोऽयंपरमःशर्कराचलः॥

॥देवानांतत्समुत्थोऽ
तन्ममानंदकारीत्वंभवशैलेंद्रसर्वदा॥अमृतंपिबतांयेतुनिपेतुर्भुविसीकराः ॥ तन्मयोऽसिमहाशैलपाहिसंसार
यंपाहिनः शर्कराचल॥मनोभवधनुर्मध्यादुद्भूताशर्करायतः ॥ परेद्युर्दानानंतर
सागरात् इति॥सर्वत्रब्राह्मणभोजनंशक्त्याकार्यमेव॥तदापूर्वेद्युः कृतोपवासः इतिदशाचल
मक्षारलवणंभुंजीत ॥ एवंप्रसन्नचित्तोदानंदद्यादिति ॥ इतिशर्कराचलदानं ॥ खर्जे
दानानि ॥ अथशिखरदानानि ॥ विष्णुधर्मे ॥ गुडेक्षुवस्त्रलवणधान्यकाजाजिशर्कराः ॥ माघेमार्गशीर्षेवैशा
रतंडुलद्राक्षक्षौद्रंमलयजेनच ॥ फलैर्मनोहरैश्चैवशिखराणिप्रदापयेत् ॥ शिखरप्रमाणंतुआत्मसमप्रमा
खेरोहिणीयुतायांतृतीयायांप्रोष्ठपदशुक्लतृतीयायांचदद्यात् ॥ उक्तकाले
णंप्रादेशाभ्यधिकंशरीरार्धप्रमाणंसप्रादेशंशरीरप्रमाणंवा ॥ अथास्यदानप्रयोगः ॥
यजमानः कृतनित्यक्रियः पूर्वाह्णे अद्येत्यादि०दुःखदौर्भाग्याभावपूर्वककल्पकोटिशतत्रयाव
च्छिन्नगौरीभवननिवासानंतरंपृथ्वीपतित्वकामः इक्षोगुडशिखरदानमहंकरिष्ये. इतिसंकल्प्य
गणेशपूजनादिनांदीश्राद्धांतंकृत्वाआचार्यवरणादियथाविभवंवस्त्रालंकारादिभिर्मधुपर्कपूजांतं
कृत्वागोमयेनोपलिप्तायांभुविइक्षुपत्राण्यास्तीर्यमूलेद्विहस्तविस्तारंउपरिहस्तमात्रविस्तारंइ
क्षुदलमयंकुसूलंकृत्वातदभ्यंतरेरक्तवस्त्रेणावेष्ट्य गुडादिदेयद्रव्येणापूर्य उपरिइक्षुपत्रकटमा

स्तीर्य तत्रक्षौमादिवस्त्रोपरिशरदिंदुवर्णाभांचंद्रमौलिपद्मासनाक्षसूत्रकमंडलुवरदाऽभयकरांहै
मींगौरींसाशिखरांसूत्रेणावेष्टयकुंकुमादिनापूजयेत् ॥ अथांगपूजा ॥ ॐ भवान्यैन० पादौ
पूज० ॐ कामिन्यैन० जानुनीपू० ॐ कामदेव्यैन० ऊरूपू० ॐ जगच्छियैन० नाभिंपू० ॐ
आनंदायैन० हृपयंपू० ॐ नंदायै० स्तनौपू० ॐ शस्त्रास्त्रधारिण्यैन० बाहूपू० ॐ
शितिकंठायै० कंठंपू० ॐ सुमुखायै० मुखंपू० ॐ त्रिलोचनायै० नेत्राणिपू० ॐ
चंद्रशेखरायैन० भालंपू० ॐ ललितायै० शिरः पू० ॐ सर्वात्मिकायै० सर्वांगंपू०
इत्यंगपूजा ॥ ततोंजलिनापुष्पाण्यादायप्रदक्षिणीकृत्यपठेत् ॥ यस्मान्निवासःपार्वत्याः
शिखरत्वंसुरैर्वृतं ॥ तस्मान्मांपाहिभगवद्गौरीतिष्ठतिसर्वदा ॥ इति पुष्पांजलिसम
र्प्य नमस्कृत्य गीतवाद्यनिर्घोषैर्जागरंकुर्यात् ॥ ततःप्रभातेस्नानादिकृतनित्यक्रियःशिखरपश्चि
मभागेप्राङ्मुखउपविश्य ॥ अद्येत्यादि० संकल्पोक्तफलं संकीर्त्यइदं गुडशिखरंगौरीप्रतिमास
हितं सोपस्करं गोत्रायशर्मणे तुभ्यमहंसंप्रददेनममेतिदद्यात् ॥ ततःसुवर्णदक्षिणांदद्यात् ॥भूय
सींचदत्वाब्राह्मणान्संभोज्यतद्दिनेक्षीरंघृतंवावाग्यतोमुक्तकेशस्तूष्णींप्राश्नीयात् ॥ इक्षुवस्त्रादि
शिखरपदस्थानेसंकल्पादौतत्तत्पदंतत्रतत्रवक्तव्यमितिविशेषः॥अन्यत्सर्वंपूर्ववदिति॥इतिगुड

शिखरदानंइतिनानाशिखरदानानि ॥ ॥ अथसमस्तपापक्षयकरंत्रिशूलदानंकर्मविपाकसारे ॥
श्रुताध्ययनसंपन्नंपावितारमकिंचनं ॥ ब्राह्मणंदांतमाहूयदानार्थंनददातियः॥मनुष्याणांहिंसक
श्चजठरेशूलवान्भवेत् ॥ वायुपुराणे ॥ कृष्णपक्षेचतुर्दश्यामष्टम्यांवासितेतरे ॥ कुर्याद्द्वादश
निष्केणत्रिशूलंलक्षणान्वितम् ॥ सुवर्णमानंतु । निष्कचतुष्कः सौवर्णिकः षट्पंचाशदधि
कशतद्वयपलमूल्योवा॥नाभौनिधायसंपूर्णंतिलानांताम्रनिर्मितं ॥पात्रमाढकमानंस्यात्तत्रशूलं
न्यसेत्पुनः॥ ततःशैवपंचाक्षरेणरुद्रप्रकाशकवैदिकमंत्रेणत्रिशूलायनमइतिनाममंत्रेणवात्रिशूलं
संपूज्य हैमंविरूपाक्षंकमलोपरिसंपूज्य अघोरेभ्योऽथ० इतिमंत्रेणपूजांतेप्रणिपत्यततोविप्रंवृत्वा
यथाविभवंवस्त्रालंकारादिभिःसंपूज्य अद्येत्यादि० ममबुद्ध्यबुद्धिपूर्वककायवाङ्मनःकृतक
र्मणाजन्मार्जितान्यजन्मोपार्जितमनुष्यहिंसनदानार्थाहूतब्राह्मणनिराकरणजन्योदरशूलजनि
तपीडापनोदकामः इदंस्वर्णमयत्रिशूलंविरूपाक्षप्रतिमायुतंसोपस्करंगोत्रायशर्मणेसुपूजिता
यतुभ्यमहंसंप्रददेनममेति ॥ मंत्रस्तु ॥ भगवन्भगनेत्रघ्नदक्षयज्ञप्रमर्दन ॥ तवायुधप्रदानेन
पापंनश्यतुशंकर ॥ युगांतेयेनलोकानांत्वमंतकविनाशनः ॥ विदग्धंयत्स्वपापेनपापौघंच
व्यपोथय ॥ येनदग्धंक्षणार्द्धेनत्रिपुरंसुरदुर्जयं ॥ तेनपाशुपतेनाशुममशूलंविनाशय ॥ यदा

बुद्धिकृतंपापंमनोवाक्कायचाक्षुषं ॥ तत्सर्वंक्षयमेवाशुशूलदानप्रभावतः इति ॥ ततः सुवर्णप
रिमितांदक्षिणांदत्वाद्विजभोजनसंकल्पंविधायभूयसींदत्वाकर्मेश्वरार्पणंकुर्यात् ॥ इतित्रिशू
लदानं ॥ अथदारिद्र्यहरंकुबेरमूर्तिदानं ॥ वायवीये ॥ दरिद्रोजायतेमर्त्योदानविघ्नंकरोतियः ॥
ऐश्वर्यंजायतेयेनकर्मणातच्छृणुष्वमे ॥ पलार्धेनतदर्धेनचतुर्थांशेनवापुनः ॥ अत्रसार्धमाष
द्वयादारभ्यपंचाशन्माषावधि वा वित्तशाठ्यराहित्येनपुष्पकविमानस्थांकुबेरमूर्तिंपार्श्व
योः पद्मशंखाकारयुतांकृत्वाशुभेह्नि अद्येत्यादि॰ ममेहजन्मनिपूर्वजन्मनिवादानविघ्नजनित
दारिद्र्यविनाशपूर्वकयथेप्सितधनप्राप्त्यर्थंकुबेरमूर्तिंदानंकरिष्ये इतिसंकल्प्यगोमयोपलिप्तेद्वि
चतुरेकद्रोणतंडुलराशौकुबेरप्रतिमांराजाधिराजेतिसंपूज्य ततआग्नेय्यांस्वगृह्यविधिनाग्निंप्रति
ष्ठाप्य समिदाज्यचरुभिः प्रत्येकमष्टोत्तरशतंराजाधिराजायेतिमंत्रेणहुत्वातत्संख्ययाघृताक्त
तिलैर्व्याहृतिभिश्चहुत्वाकुबेरमूर्तिंदद्यात् ॥ अद्येत्यादि॰ ममेह जन्मनि जन्मांतरे वा कृतदा
नविघ्नजनिततीव्रदारिद्र्यविनाशपूर्वकं यथेप्सितधनप्राप्त्यर्थंच इमांकुबेरमूर्तिंपुष्पकविमानस्थ
पार्श्वयोः पद्मशंखाकारयुतांसोपस्करांगोत्रायशर्मणे सुपूजितायतुभ्यमहंसंप्रददेनममेति ॥
मंत्रस्तु ॥ उत्तराशापतेदेवकुबेरनरवाहन ॥ पद्मशंखनिधीनांत्वंपतिःश्रीकंठवल्लभः ॥ दानवि

न्मयाप्राप्तंदारिद्र्यंममदुःखदं ॥ तत्सर्वंतवदानेनपापमाशुविनाशय इति॥देयद्रव्यतृतीयांशं चतुर्थांशंवासुवर्णंदक्षिणांदद्यादितिविशेषः ॥ ततोब्राह्मणभोजनंसंकल्प्यभूयसींदक्षिणांदद्यात् ॥ इतिदारिद्र्यहरंकुबेरमूर्तिदानम् ॥ अथउमामहेश्वरमूर्तिदानं॥ भविष्ये ॥ अद्येत्यादि० सशैलवनकाननसप्तसागरपृथ्वीदानसमफलावाप्तये इमामुमामहेश्वरमूर्तिंसालंकृतांसोपस्करांसोपकरणांगोत्रायशर्मणेतुभ्यमहंसंप्रददेनममेति ॥ मंत्रस्तु ॥ शिवशक्त्यात्मकंयस्माज्जगदेतच्चराचरं ॥ तवदानेनमेवश्यापृथिवीस्यात्सुनिश्चला ॥ सुवर्णंदक्षिणांदद्यात् ॥ इति उमामहेश्वरमूर्तिदानम् ॥ अथलक्ष्मीनारायणमूर्तिदानं ॥ स्कांदे । संकल्पादिपूर्ववत् ॥ मंत्रस्तु ॥ लक्ष्मीनिवासदेवेशशंखचक्रगदाधर ॥ तवदानात्स्थिरालक्ष्मीर्मद्गृहेस्यात्सदाध्रुवं ॥ सुवर्णदक्षिणां दद्यात् ॥ इतिलक्ष्मीनारायणमूर्तिदानम्॥अथहरिहरमूर्तिदानं ॥ संकल्पादिपूर्ववत् ॥ मंत्रस्तु ॥ शिवोनामशिवःसाक्षात्तथानारायणोपिच॥ अस्यदानाद्धरिहरौप्रसन्नौस्तांसदामम॥ इतिहरिहरमूर्तिदानम् ॥ अथसूर्यमूर्तिदानं॥सूर्यारुणसंवादे॥संकल्पादिपूर्ववत्॥मंत्रस्तु॥ ग्रहाणामधिपःसूर्यःपद्महस्तःप्रभाकरः ॥अस्यदानेनसविताआयुःश्रीशांतिदोस्तुमे॥सुवर्णादिदक्षिणांदद्यात् ॥ इतिसूर्यमूर्तिदानम् ॥ अथगणपतिमूर्तिदानं ॥ स्कांदे । यमाननंतिईशाद्याविश्व

नाथसुमासुतं ॥ विघ्नेशरक्षमचुरंतुभ्यंदास्याम्यभीष्टदम् ॥ इतिसंप्रार्थ्येसंकल्पादिकृत्वादद्या
त् ॥ मंत्रस्तु ॥ गणनाथोविघ्नहरोगौरीसूनुरभीष्टदः ॥ अस्यदानेनमेशांतिः प्रसन्नोस्तुविना
यकः इति ॥ इतिगणेशमूर्तिदानम् ॥ अथजगदंबिकामूर्तिदानं ॥ देवीपुराणे ॥ संकल्पादिपू
र्ववत् ॥ मंत्रस्तु । आदिमायामहाशक्तिर्विश्वमाताजगन्मयी ॥ दानेनास्याः प्रसन्नास्तुसर्वदा
ममशांभवी इति ॥ इतिजगदंबिकादानम्॥अथसरस्वतीमूर्तिदानं ॥ वायवीये ॥ संकल्पादि
पूर्ववत् ॥ मंत्रस्तु ॥ वीणापुस्तकसंयुक्तावाङ्मूर्तिः समलंकृता ॥ गृहाणत्वंद्विजश्रेष्ठवाक्सि
द्धिरस्तुकुलेमम इति ॥ इतिसरस्वतीमूर्तिदानम्॥ अथशालग्रामदानं ॥ हेमाद्रौपाद्मे ॥ शालि
ग्रामशिलाचक्रंयोदद्याद्दानमुत्तमं॥भूचक्रंतेनदत्तंस्यात्सशैलवनकाननम् इति ॥ अद्येत्यादि०
सशैलवनकाननभूचक्रदानसमफलकामइमंशालग्रामंघंटाशंखादिसोपकरणंतुलसीपत्राद्यर्चितं
सवस्त्रफलंताम्रादिपात्रेस्थितंयथाशक्तिसोपस्करंसालंकृतंगोत्रायशर्मणेसालंकृतायतुभ्यमहंसं
प्रददेनममेति ॥ मंत्रस्तु ॥ महाकोशनिवासेनचक्राद्यैरुपशोभितः ॥ शालग्रामप्रदानेनममसं
तुमनोरथाः इति ॥ सुवर्णदक्षिणासर्वत्रनराजतम् ॥ एवंसंकल्पादिसर्वदेवमूर्तिशिलादानेष्वपि
योजनीयं ॥ मणिः शालग्रामइतिहेमाद्रिणाव्याख्यातम् घोरप्रतिग्रहेषुचगणितामिति ॥ इति

शालग्रामदानम् ॥ अथशिवनाभिदानं ॥ लैंगे ॥ संकल्पादिपूर्ववत् ॥ मंत्रस्तु॥ शालग्रामशि लापुण्याभुक्तिमुक्तिप्रदायिनी ॥ शिवनाभेः प्रदानेनपूर्णाः संतुमनोरथा इति ॥ तथा । महा कोशनिवासत्वंशालग्राममहेश्वर ॥ प्रीयंतांतवदानेनब्रह्मविष्णुमहेश्वराः ॥ इतिशिवनाभिदा नम् ॥ अथलिंगदानं ॥ लैंगे । संकल्पादिपूर्ववत् ॥ मंत्रस्तु । सालंकारमहालिंगनिवासत्वं वृषध्वज ॥ प्रीयतांतवदानेनशिवोगौर्यायुतस्तुमे ॥ इति ॥ तथा । कैलासवासोगौरीशोभग वान्भगनेत्रभित् ॥ चराचरात्मकोलिंगरूपीदिशतुवांछितम् इति ॥ रुद्राक्षमालासहितं लिंगंदद्यात् ॥ कोटिगुणंपुण्यंभवति ॥अथमारकतलिंगदानं ॥ मन्त्रस्तु । इदंमारकतंलिंगंरौ प्यपीठसमन्वितं ॥ धान्यैर्द्वादशभिर्युक्तमेकादशफलान्वितं ॥ संप्रदद्याद्विधानेनपृथ्वीदानफ लंलभेत् इति ॥ रुद्राक्षमालायुतं । संकल्पाद्युक्तमेव । काश्मीरलिंगदानेतुमारकतपदस्थाने काश्मीरपदंवदेत् ॥ मंत्रस्तु ॥ मृत्युंजयेशगौरीशसूनुभ्यांवृषवाहन ॥ संप्रदानेनमेशंभोमम संतुमनोरथाः॥इति ॥ इतिलिंगदानम्॥अथघंटादानम् ॥ पाद्मे । अद्येत्यादि० ममाकल्पघंटा नादश्रवणलोकनिवासावाप्तिसिद्ध्यइमांघंटांविष्णुदेवत्यांगोत्रायशर्मणेस्वलंकृतायतुभ्यमहंसं प्रददेनममेति ॥ मंत्रस्तु ॥ घंटादेवप्रियानित्यंदैत्यत्रासकरीसदा ॥ संप्रदानेनचैतस्याविजयोऽ स्तुसदाममइति ॥ सुवर्णदक्षिणांदद्यात्॥इतिघंटादानम् ॥ अथशंखदानं ॥ पाद्मे ॥ अद्येत्या०

इमंशंखंविष्णुदैवतंगोत्रायशर्मणेसुपूजितायतुभ्यमहंसंप्रददेनममेति ॥ मंत्रस्तु ॥ शंखः शुभ
करोनित्यंसर्वमंगलदायकः ॥ तस्मादस्यप्रदानेनशांतिरस्तुसदामम इति । सुवर्णदक्षिणां० ॥
इतिशंखदानम्॥अथकालचक्रदानं ॥ मृत्युंजयकल्पे ॥ महामृत्युनिवारणार्थंकालचक्रदानमु
क्तं॥संकल्पस्तु अद्येत्यादि० शक्तितोरौप्यकृतंचंद्राकारमनेकमुक्तामालात्मकरश्मियुक्तंकाल
चक्रंमहामृत्युनिवारणकामोविप्रायगंधालंकारादिभिः सम्पूजितायतुभ्यमहंसंप्रददेनममेति ॥
मंत्रस्तु ॥ इदंमेराजतंचक्रंमिदुरश्मिसमाकुलम् ॥ अपमृत्युविनाशायदत्तमायुर्विवृद्धये इति ।
ततः सुवर्णदक्षिणांदत्त्वा अग्निंप्रतिष्ठाप्य ॐ कालचक्रायनमः स्वाहेत्यनेनमंत्रेणाष्टोत्तरशत
वारंघृताक्ततिलैर्हुत्वापायसादिनाद्वादशब्राह्मणान्भोजयित्वास्वयमक्षारलवणंसकृद्भुंजीतेति ॥
इति कालचक्रदानम् ॥ अथापरमपमृत्युहरंयममूर्तिदानं ॥ मृत्युंजयकल्पे ॥ लोहपात्रेस्थि
तंकांस्यंतत्रपद्मंतुराजतं ॥ तस्मिन्कालेश्वरः स्वर्णैः पुरुषाकारतांगतः ॥ तद्रूपंतु ॥
ईषत्पीतोदंडहस्तोरक्तदृक्पाशहस्तकः ॥ क्रुद्धोवस्त्रालंकृतः स्याद्रोगिणामभयप्रदः ॥ अ
लंकृतः स्वर्णालंकारैः त्रिलोहाकारैर्दूतैर्वृतः । त्रिलोहंकांस्यताम्रपित्तलाख्यं । पुरुषाका
रैर्दूतैर्दंडहस्तैःकृत्वायमंमहिषपृष्ठेअष्टम्यांचतुर्दश्यांवाददद्यात् ॥ दक्षिणातुघृतपूर्णोघटः सुव
र्णंवा ॥ एवंकृत्वादानेननाशान्मुच्यते॥नाशोऽपमृत्युः॥इत्यपमृत्युहरंयममूर्तिदानम्॥अथका

ळपुरुषदानं॥भविष्ये। ज्ञेयोनिष्कशतंपार्थदानेऽयंविधिरुत्तमः॥ मध्यमस्तुतदर्धेनतदर्धेनाध
मःस्मृतइति॥ अत्यशक्तौपंचसौवर्णिकोवा। ततोऽल्पेनतुप्रतिग्रहीतादुःखशोकावहःस्यात्।
चतुर्थ्यांचतुर्दश्यांभद्रायांकरणेवाकुर्यात्॥कालपुरुषस्वरूपमाह॥ रौप्यदशनंसुवर्णनेत्रंखड्ग
धृतकरंमांसपिंडयुतवामकरंजपाकुसुमकुण्डलंरक्तवस्त्रंस्रग्विणंशंखमालधरंछुरिकायुतकटिदे
शंअतिदीर्घंकृष्णाजिनयुतंनिर्माय अद्येत्यादि॰ अपमृत्युव्याधिसर्वबाधानिवारणाव्याहतै
श्वर्यप्राप्तिधर्मश्रीपुत्रपौत्रादिकर्तृकराज्यपरमपदावाप्तिकामः कालपुरुषदानमहं करिष्येइति॥
कालपुरुषंसंपूज्य विभूष्य द्विजंवृत्वायथाविभववस्त्रालंकारादिभिः संपूज्य पुष्पांजलिंगृहीत्वा
पठेत्॥ सर्वंकलयसेयस्मात्कालस्त्वंतेनचोच्यसे॥ ब्रह्मविष्णुशिवादीनांत्वमसाध्योऽसिसु
व्रत॥ पूजितस्त्वंयथाभक्त्याप्रार्थितश्चयथासुखं॥ यद्बुध्यतेतवविभोतत्कुरुष्वनमोऽस्तुते॥
इतिसंप्रार्थ्य॥ अद्येत्यादि॰ अपमृत्युव्याधिस॰ इत्यादिराज्यपरमपदावाप्तिकामातंसंकल्पो
क्तवरफलंसंकीर्त्य इमंकालपुरुषंसालंकृतंउक्तोपस्करंविष्णुदैवतंगोत्रायशर्मणेसुपूजितायतु
भ्यमहंसंप्रददेनममेतिदत्त्वा पंचसुवर्णादूर्ध्वंमानिष्कशतंदक्षिणांदत्त्वातंविसृज्यतन्मुखंनेक्षेन्न
स्पृशेच्च॥ ततः शांतापृथिवीशिवमंतरिक्षमितिजपित्वा हस्तौपादौप्रक्षाल्यआचम्यभूयसीं
दक्षिणांदत्त्वा विप्रान्संभोज्यसुहृद्युतोभुंजीतेति॥ अनेनविधिनायस्तुदानमेतत्प्रयच्छति॥

नापमृत्युभयंतस्यनचव्याधिकृतंभयं ॥ भवत्यव्याहतैश्वर्यः सर्वबाधाविवर्जितः ॥ इतिहेमाद्रौकालपुरुषदानम् ॥ अथसर्वसंपत्करदानं ॥ ब्रह्मांडपुराणे ॥ सूर्योपरागादिपुण्यकालेदेवालयादिपुण्यदेशेगृहेवाकार्यम् ॥ प्रातस्तिलकुशमिश्रोदकेनस्नात्वाकृतनित्यक्रियः आचम्यप्राणानायम्याद्येत्यादि० सर्वसंपदायुरारोग्यसमस्तपापनाशपुत्रपौत्रादिकुलवृद्धिस्वर्गनिवासमोक्षेष्टसिद्धकामो मित्रादिप्रतिमादानमहंकरिष्ये ॥ गुरुंवृत्वायथाविभववस्त्रालंकारादिभिः पूजयेत् ॥ ततोविशुद्धस्तांचतुरस्रांभुवंगोमयेनोपलिप्यतत्रप्रागायताश्चतस्रउदगायताश्चतस्रोलेखालिखित्वातेषुनवकोष्ठेषुद्रोणमिततंदुलान्निक्षिप्यतेषुनवकुंभान्संस्थाप्यवस्त्रैरावेष्टयतेषुसुवर्णत्रयादूर्ध्वंपलावधिसुवर्णनिर्मितानवप्रतिमाः संस्थाप्यपूजयेत् । तत्रपश्चिमपंक्तौउदक्संस्थंमित्रंवरुणंसोमं मध्यपंक्तौब्रह्माणंचतुर्भुजंविष्णुंउमापतिंचांत्यपंक्तौदिवाकरंवृत्रहणंवह्निंच । ततोष्टौविप्रान्संपूज्यैकैकस्मै अद्येत्यादि० संपदादिकामांतंसंकल्पोक्तफलमुद्दिश्यइमांमित्रप्रतिमां सुपूजितांगोत्रायशर्मणेसुपूजितायतुभ्यमहंसंप्रददेनममेतिदत्त्वा त

| | | |
|---|---|---|
| वह्निं ९ | वृत्रहणं ८ | दिवाकरं ७ |
| उमापतिं ६ | विष्णुं चतुर्भुजं ५ | ब्रह्माणं ४ |
| सोमं ३ | वरुणं २ | मित्रं १ |

तोवरुणप्रतिमांगुरवेदत्त्वादेयद्रव्यसमंसुवर्णदक्षिणांवस्त्रयुगंचदद्यात् । ततःसोमब्रह्मविष्णुशिवदिवाकरवृत्रहवह्निप्रतिमाश्चब्राह्मणेभ्योदत्त्वासुवर्णदक्षिणांचतेभ्योदत्त्वाब्राह्मणांश्चभोजयित्वाभूयसींचदत्त्वासुहृद्युतोभुंजीतेति ॥ इतिसर्वसंपत्करदानम् ॥ अथकृष्णाजिनदानं ॥ सौरपुराणे । कृष्णाजिनंचमहिषीमेषीचदशधेनवः । ब्रह्मलोकप्रदायीस्यात्तुलापुरुषएवच इति ॥ मात्स्ये । वैशाखीपौर्णमासीचग्रहणेशशिसूर्ययोः ॥ पौर्णमासीतुयामाघेआषाढीकार्तिकीतथा ॥ उत्तरायणंद्वादशी वा तस्यांदत्तंमहाफलम् इति ॥ अथास्यदानप्रयोगः ॥ पूर्वोक्तकालेगोमयेनोपलिप्तदेशे आविकंकंबलंतदुपरिसशृंगंसखुरंप्राग्ग्रीवंकृष्णाजिनमास्तीर्यसुवर्णखुरंरौप्यदंतं मौक्तिकपुच्छंसुवर्णनाभंकृत्वातदुपर्यरत्निप्रमाणांस्तिलान्संस्थाप्यवाससाच्छाद्य सगंधरत्नानिचत्वारिपात्राणिकांस्यघृतदुग्धदधिमधुयुतानिचतस्रोमृदश्चप्रागादिदिक्षुदानदेशाद्बहिश्चंपकशाखामव्रणंकुंभंचसंस्थाप्यदेशकालौसंकीर्त्यममसप्तजन्मोपात्तपापनाशाय आत्मपितृपुत्रापमृत्युपरिहारभार्याधनदेशाद्यवियोगफलावाप्तये सकलेष्टफलावाप्तिब्रह्मलोकावाप्तिकामश्चकृष्णाजिनदानमहंकरिष्ये इति संकल्प्य । जीर्णपीतवाससास्वांगानिसंमृज्य । यानिकानिचपापानिमयालोभात्कृतानिच ॥ लोहपात्रप्र

दानेनप्रणश्यंतुममाशुवै ॥ इतिमंत्रेणसतिललोहपात्रंकृष्णाजिनस्यवामपादेनिवेशयेत् । या
निकानिचपापानिकर्णोत्थानिकृतानिच ॥ कांस्यपात्रप्रदानेनतानिनश्यंतुमेसदा ॥ इतिमंत्रे
णमधुमयंकांस्यपात्रंकृष्णाजिनस्यदक्षिणपादेनिवेश्य ॥ परापवादपैशून्यादभक्षस्यचभक्षणा
त् ॥ यदुत्थितंतुमेपापंताम्रपात्रात्प्रणश्यतु ॥ इतिमंत्रेणसतिलंताम्रपात्रंवामहस्तेनिवेश्य ॥
कन्यानृतंगवांचैवपरदारप्रमर्शनं ॥ रौप्यपात्रप्रदानेनक्षिप्रंनाशंप्रयातुमे ॥ इतिमंत्रेणमधुमयं
रौप्यपात्रंदक्षिणहस्तेनिवेश्य ॥ मयाजन्मसहस्रेषुकृतंपापंप्रबुद्धिना ॥ सुवर्णपात्रदानात्तन्नाश
याशुजनार्दन ॥ इतिमंत्रेणसाक्षतंहैमपात्रंमध्येतथाहेममुक्ताविद्रुमदाडिममातुलिंगानिनिधाय
प्रशस्तपात्रेकर्णयोः संस्थाप्य द्विजंवृत्वायथाविभवंवस्त्रालंकारादिभिः संपूज्यपुनर्देश
कालौसंकीर्त्याऽमुकगोत्रोमुकशर्माऽहंममसमस्तजन्मोपात्तादिब्रह्मलोकावाप्तयेइत्यन्तमुक्त्वातृ
पभध्वजप्रीतये इदंकृष्णाजिनंयथाशक्तिसोपस्करं गोत्रायशर्मणेसुपूजितायतुभ्यमहं
संप्रददेनममेति ॥ एतद्दक्षिणापरिमाणंतुगारुडे ॥ सुवर्णनिष्कशतंतदर्धंतदर्धंवा ॥ ततोन्यून
त्वेनाधिकफलं ॥ अस्पृश्यः सद्विजोराजंश्चितिरूपसमोहिसः ॥ दानेचश्राद्धकृत्येचदूरतःपरि
वर्जयेत् ॥ इतिगारुडेउक्तं ॥ स्वगृहान्प्रेष्यतंविप्रंमंगलस्नानमाचरेत् इति ॥ तद्वस्त्रंकुंभसहितं

नीत्वाक्षेप्यंचतुष्पथे इति ॥ ततोभूयसींदक्षिणांदत्त्वाशिषोगृह्णीयात् ॥ दानेनानेनसकलारिष्ट पापनाशोभूमिदानफलंचेतिहेमाद्रिः ॥ होमादिविशेषस्तुग्रंथांतरादवगंतव्यः ॥ इतिकृष्णाजिनदानम् ॥ अथशय्यादानं ॥ महाभारते । यजमानः पुण्यकालेअष्टदलेतिलप्रस्थंनिक्षिप्यतस्मिन्शय्यामास्तीर्यतस्याः समंतादीशानादिकोणचतुष्टयेशिरोभागेचपंचकुम्भान्क्रमात् घृतकुंकुमगोधूमजलपूर्णकुंभमुच्छीर्षेघृतपूर्णकलशंसप्तधान्यानिचसंस्थाप्य अद्येत्यादि० ममसमस्तपापक्षयपूर्वकाप्सरोगणसेवायुताविमानकरणकेन्द्रपुरगमनोत्तरषष्टिसहस्रवर्षाधिकरणकक्रीडनस्त्रीसंगसमावृतसर्वलोकमहिमत्वतदुत्तरषष्टियोजनमंडलराज्यभोगानंतरशिवसायुज्यावाप्तये शय्यादानमहंकरिष्ये इतिसंकल्प्य द्विजंसपत्नीकंवृत्वायथाविभवंवस्त्रालंकारादिभिः संपूज्य शय्यायांलक्ष्मीनारायणप्रतिमांस्वर्णमयींसंस्थाप्यसंपूज्यसपत्नीकाविप्रेणसहशय्यांप्रदक्षिणीकृत्यनमः प्रमाण्यैदेव्यैइतिचतुर्दिक्षुक्रमेणप्रणम्यातिथ्यादिसंकीर्त्य मम सर्वपापक्षयेत्यादिशिवसायुज्यावाप्तयेइत्यंतमुक्त्वा इमांशय्यांईशानादिकोणचतुष्टयस्थापनक्रमेणघृतकुंकुमगोधूमजलघृतपूर्णकुंभसमेतांहंसतूलींप्रच्छन्नांशुभ्रगंडोपधानिकांप्रच्छादनपटास्तृतांसप्तधान्ययुतांतांबूलायतनादर्शैलालवंगकर्पूरयुतां सुगंधपरिमलभोग्यवस्तुचंदना

गरुदीपिकोपानच्छत्रचामरासनयुतांभोजनभाजनजलपात्रपंचवर्णवितानांकेशप्रसाधन्यंजन
शलाकापुष्पमालादियुतांलक्ष्मीनारायणप्रतिमासहितांयुक्तोपस्करामंगिरोदैवतांगोत्रायशर्म
णेसुपूजितायसालंकृतायसपत्नीकायतुभ्यमहंसंप्रददेनममइति शय्योपवेशितविप्रहस्तेसा
क्षतकुशोदकंक्षिपेत् ॥ मंत्रस्तु ॥ यथानकृष्णशयनंशून्यंसागरजातया ॥ तथाशय्याम
माप्यस्त्वशून्याजन्मनिजन्मनि इति । ततः सुवर्णमेवदाक्षिणांदद्यात् । ततोभूयसींदत्त्वा
ब्राह्मणांश्चभोजयेदिति ॥ इतिशय्यादानम् ॥ अथशयनदानं ॥ भविष्ये । अद्येत्यादि० इदं
शयनंसुखस्पर्शंश्रीविष्णुप्रीतिकामोगोत्रायशर्मणेतुभ्यमहंसंप्रददेनममेति मंत्रस्तु ॥ शयनं
सुखदंकांतंकेशवस्याप्रियंसदा ॥ दानेनानेनसौभाग्यंसर्वदास्तुगृहेमम इति ॥ ततः सुवर्णद
क्षिणांदद्यात् ॥ इतिशयनदानं ॥ अथकशिपुदानं ॥ भविष्ये । अद्येत्यादि०यावज्जीवंशीतवा
तोष्णनिवारणकामइदंकशिपुदानंगोत्रायशर्मणेतुभ्यमहंसंप्रददेनममेति ॥ मंत्रस्तु ॥ मृदुतूल
बीजकार्पासपूरितंसुखदंनृणां ॥ तस्मादस्यप्रदानेनसुखंस्यात्सर्वदामम इति ॥ इतिकशिपुदा
नम् ॥ अथवस्त्रदानानि ॥ नंदिपुराणे । वस्त्रंयथार्थिनेदद्याच्छुभंवापियदृच्छया ॥ सभवेद्धन
वाञ्च्छ्रीमान्बृहस्पतिपुरेवसेत् ॥ इति ॥ विष्णुधर्मोत्तरे ॥ वासोहिसर्वदेवत्यंसर्वप्रायोज्यमु

युक्तोलावण्यसौभाग्यैर्विरोगीचतथाद्विजः
च्यते ॥ वस्त्रदानात्सुवेषःस्याद्रूपद्रविणसंयुतः ॥ युक्तोलावण्यसौभाग्यैर्विरोगीचतथाद्विजः
॥ दत्त्वाकार्पासिकंवस्त्रंस्वर्गलोकेमहीयते ॥ दत्त्वोर्णजंचतत्रापिफलंदशगुणं भवेत् इति ॥ अ
द्येत्या० इदंश्वेतवस्त्रंसूक्ष्मंशिवप्रियंदेहालंकरणंबृहस्पतिदैवतंगोत्रायशर्मणेतुभ्यमहंसंप्रददे
नममेति ॥ मंत्रस्तु ॥ सितंसूक्ष्मंसुखस्पर्शमीशानादेःप्रियंसदा ॥ देहालंकरणंयस्मादतः
शांतिंप्रयच्छमे इति ॥ इतिश्वेतवस्त्रदानं ॥ अथपीतस्य ॥ संकल्पादिसमस्तपापक्षयका
म० ॥ मंत्रस्तु ॥ पीतवासः सुमंगल्यंदेवानांप्रीतिवर्धनं ॥ दानेनानेनमेपापंहरत्वाशुजनार्द
नः ॥ इतिपीतवस्त्रदानम् ॥ अथरक्तवस्त्रदानं ॥ भविष्ये ॥ संकल्पादि० आदित्यप्रीतिकामः
॥ मंत्रस्तु ॥ रक्तवस्त्रं सदारम्यमादित्यस्यप्रियंसदा ॥ श्रीकरंरूपदंनित्यमतः शांतिंप्रय
च्छमे ॥ इतिरक्तवस्त्रदानम् ॥ अथनीलवस्त्रदानं ॥ भविष्ये ॥ संकल्पादि० बलायुः श्रीवृद्धि
कामः ॥ मंत्रस्तु ॥ मनोहरंनीलवस्त्रंबलरामप्रियंसदा ॥ आयुर्विवर्धनंश्रीदमतःशांतिंप्रयच्छ
मे ॥ इतिनीलवस्त्रदानं ॥ अथचित्रवस्त्रदानं ॥भविष्ये ॥ संकल्पादि० षण्मुखप्रीतिकामः० ॥
मंत्रस्तु ॥ षण्मुखस्यप्रियंरम्यंचित्रवस्त्रंमनोरमं ॥ तस्मादस्यप्रदानेनशांतिरस्तुसदामम
इति ॥ इतिचित्रवस्त्रदानम् ॥ अथकृष्णवस्त्रदानं ॥ भविष्ये ॥संकल्पादि० सर्वारिष्टभयपी

डापमृत्युपरिहारायमृत्योः प्रीतिकामश्च इदंकृष्णवस्त्रंगोत्रायशर्मणेसुपूजितायतुभ्यमहंसंप्रद
दे ॥ मंत्रस्तु ॥ कृष्णंवासः प्रियंमृत्योः सर्वारिष्टविनाशनं ॥ भयपीडामृतिहरमतः शांतिंप्र
यच्छमे ॥ इतिकृष्णवस्त्रदानम् ॥ अथपट्टकूलदानं ॥ भविष्ये ॥ संकल्पादि० कीर्तिकांतिस
र्वदेवप्रीतिकामश्च० ॥ मंत्रस्तु ॥ पट्टकूलंसदारम्यंपवित्रंकामदंनृणां ॥ विष्ण्वादीनांप्रीतिक
रमतः शांतिंप्रयच्छमे ॥ इतिपट्टकूलदानम् ॥ अथमृतकर्पटदानं ॥ भविष्ये ॥ संकल्पादि०
पितृतृप्तिकामः० ॥ मंत्रस्तु ॥ कीटजंटसरंपुण्यंमृतकर्पटसंज्ञकम् ॥ पितृणांप्रीतिदंयस्मादतः
शांतिंप्रयच्छमे॥इति मृतकर्पटदानम् ॥अथऊर्णावस्त्रदानं॥ भविष्ये ।संकल्पादि० सर्वदेवप्री
तिकामः०मंत्रस्तु ॥ ऊर्णावस्त्रंचारुचित्रंदेवानांप्रीतिवर्धनं ॥ सुखस्पर्शकरंयस्मादतः शांतिं
प्रयच्छमे ॥ इत्यूर्णावस्त्रदानम्॥ अथकंबलदानं ॥ स्कांदे । कंबलः पट्टगर्भश्चेन्महाशीतविना
शकः ॥ सएवविपरीतश्चेन्महावृष्टिविनाशकः॥संकल्पादि०श्रीविष्णुप्रीतिकामः० ॥ मंत्रस्तु
शीतवर्षाहरः पुण्योदृष्टीबलविवर्धनः ॥ कंबलस्य प्रदानेनशांतिरस्तुसदाममेति ॥ इतिकंब
लदानम् ॥ अथचित्रकंबलदानं ॥ भविष्ये ॥ संकल्पादि०श्रीलक्ष्मीनारायणप्रीतिकामः०.॥
मंत्रस्तु ॥ ऊर्णापट्टश्चाविकादिःसर्वदेवप्रियःशुचिः ॥ चित्रकंबलदानेनममसंतुमनोरथाः ॥

इतिचित्रकंबलदानं ॥ अथताम्रपात्रदानं ॥ वराहपुराणे । अथातःसंप्रवक्ष्यामिपात्रदानमनुत्त
मं ॥ कृत्वाताम्रमयंपात्रंयथाविभवविस्तरं ॥ तत्पात्रेहैमींलक्ष्मीनारयणप्रतिमांउमामहेश्वरप्र
तिमांचसंपूज्यद्विजमपिपूजयित्वा परापवादपैशून्यमभक्ष्यभक्षणादिशरीरोत्थसकलपापना
शकामइदंताम्रपात्रं उमामहेश्वरलक्ष्मीनारायणप्रतिमासहितंचगोत्रायशर्मणेसुपूजितायतुभ्य
महंसंप्रददेनममेति ॥ मंत्रस्तु परापवादपैशून्यादभक्ष्यस्यचभक्षणात् ॥ पापंगात्रोत्थितंता
म्रपात्रदानात्प्रणश्यतु इति ॥ एवंसंकल्पवाक्यंप्रतिमादिसर्वपात्रदानेषुबोध्यं ॥ इतिताम्रपात्र
दानं ॥ अथप्रसंगात्ताम्रदानमपिभविष्ये । संकल्पादि० आरोग्यबलवृद्धिसूर्यप्रीतिकामः०
मंत्रस्तु ॥ सूर्यप्रीतिकरंताम्रमारोग्यबलवर्धनं ॥ तस्मादस्यप्रदानेनशांतिरस्तुसदामम इति॥
इतिताम्रदानं ॥ अथकांस्यपात्रदानं ॥ वाराहे। संकल्पादि० कामकृतपापनाशकामः० मंत्र
स्तु॥ यानिपापान्यनेकानिकामाकामकृतानिच ॥ कांस्यपात्रप्रदानेनतानिनश्यंतुमेसदा इति
इतिकांस्यपात्रदानं ॥ अथप्रसंगात्कांस्यदानमपिभविष्ये । संकल्पादि०ब्रह्मविष्णुशिवप्रीति
कामः०मंत्रस्तु ॥ कांस्येब्रह्माशिवौसाक्षात्कांस्यमेतद्विभावसुः ॥ कांस्यंविष्णुमयंयस्माद्त
श्शांतिंप्रयच्छमे ॥ इतिकांस्यदानं ॥ अथलोहपात्रदानं ॥ भविष्ये । संकल्पादि० लोभा

ज्ञानाज्ञानकृतपापक्षयकामः० ॥ मंत्रस्तु ॥ ज्ञानाज्ञानकृतंपापंमयालोभात्कृतंचिरात् ॥
लोहपात्रप्रदानेनममशीघ्रंव्यपोहतु ॥ इतिलोहपात्रदानं ॥ अथरौप्यपात्रदानं ॥ विष्णुधर्मे ।
संकल्पादि० कन्यादूषणपरदाराभिमर्शनादिपापक्षयकामः० ॥ मंत्रस्तु ॥ कन्यादूषणतः
पापंपरदाराभिमर्शनात् ॥ रौप्यपात्रप्रदानेनतानिनश्यंतुमेसदा इति ॥ इतिरौप्यपात्रदानं ॥
अथसुवर्णपात्रदानं ॥ वाराहे । संकल्पादि० जन्मांतरसहस्रोत्थदुष्कृतनाशकामः० ॥ मंत्र
स्तु ॥ जन्मांतरसहस्रेषुयत्कृतंदुष्कृतंमया ॥ तत्सर्वंनाशमायातुस्वर्णपात्रप्रदानतः ॥ इ
ति ॥ इतिसुवर्णपात्रदानं ॥ अथस्थालीदानं ॥ भविष्ये । कृत्वाताम्रमयींस्थालींपलानांपंच
भिः शतैः ॥ अशक्तस्तुतदर्धेनतदर्धार्धेनवापुनः ॥ अत्यशक्तौमृन्मयींपायसेनपूर्णांघृतशर्करा
शाकजलपात्रयुतांचसवस्त्रांमंडलेसंस्थाप्यगंधमाल्यादिनालंकृत्य ॥ आदित्येऽहनिसंक्रांतौच
तुर्दश्यष्टमीषुच ॥ एकादश्यांतृतीयायांविप्रायप्रतिपादयेत् ॥ अद्येत्यादि० यावज्जीवंसकुटुंब
स्ययथेष्टमन्नमक्षय्यभोज्यादिलाभकामः इमांस्थालीं पायसपूर्णां घृतशर्कराशाकजलपात्रव
स्त्रायुतांमंडलस्थांसालंकृतांगोत्रायशर्मणेतुभ्यमहंसंप्रददेनममेति ॥ मंत्रस्तु । इमांपायसपूर्णां
यः स्थालींघृतजलादिभिः ॥ दद्यात्संपत्तिपात्रंस्यादतः पाहिमहेश्वर इति सकलतिथीनाम

मादीनामप्ययमेवमंत्रः ॥ सुवर्णदक्षिणांदद्यात् ॥ इतिस्थालीदानं ॥ अथवेदपुस्तकादिदाना
नि ॥ वायवीये ॥ अष्टादशपुराणानिसहिरण्यानिपर्वणि ॥ लिखित्वा यः प्रयच्छेत्तुसविद्यापार
गोभवेत् ॥ रामायणंभारतंचदत्वास्वर्गेमहीयते ॥ धर्मशास्त्रंनरोदत्वास्वर्गलोकेमहीयते इति
भविष्ये ॥ धेनुदानसहस्रेणसम्यग्दत्तेनयत्फलं ॥ तत्फलंसमवाप्नोतिपुस्तकैकप्रदानतइति ॥
अथप्रसंगाच्चतुर्दशविद्याउक्तामदनरत्नेनंदिपुराणे ॥ विद्याश्चतुर्दशप्रोक्ताःक्रमेणचयथास्थिताः
षडंगाश्चतुरोवेदाधर्मशास्त्रंपुरातनं ॥ मीमांसातर्कशास्त्रंचएताविद्याश्चतुर्दश ॥ आसामवांतरो
त्पन्नाः पराविद्याः सहस्रशः इति ॥ पुरातनंपुराणं ॥ तत्रैवकालमाह ॥ चंद्रसूर्योपरागेवासंक्रां
त्ययनवासरे ॥ शुभेह्निशुभनक्षत्रेकृत्वामंडलमुत्तमं ॥ चतुरस्रंवितानंचबध्वापुष्पोपशोभितं ॥
तत्रन्यस्यासनंदिव्यंदिव्यगंधाधिवासितं ॥ तत्रसंस्थापयेद्यंत्रंनागदंतमयंशुभं ॥ संस्थाप्यपु
स्तकंतत्रनैगमंभारतादिकं ॥ नैगमंवेदपुस्तकं । पुण्यंपवित्रंसंपूज्यवस्त्रालंकारभूषणैः ॥ पूज
येच्चदिशापालांल्लोकपालान्यथाक्रमं ॥ कन्याः स्त्रियश्चसंपूज्यामातरः कल्पयेच्चताः ॥ शा
स्त्रतत्त्वविदुषेदद्यात्पुस्तकमुत्तमम् इति ॥ अथास्यदानप्रयोगः ॥ यजमानः कृतनित्यक्रि
यः शुचिः पुण्यकालेदेशकालौसंकीर्त्यगोसहस्रदानसमफलावाप्तिस्वर्गलोकमाहेमत्वचतुर्दश

विद्यावेदांगपारगत्वसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंअमुकपुस्तकदानमहंकरिष्येइतिसंकल्प्य पूर्वोक्तमंडपादियथाशक्त्याकल्पयित्वा नागमययंत्रेवस्त्रद्वयबद्धऊर्णापट्टसूत्रवेष्टितंपुस्तकंसंस्थाप्यहैमींसरस्वतीप्रतिमांरौप्यमयसिंहं विष्णुंचतत्रावाह्यपरितोलोकपालांश्चावाह्यतत्रसुवासिनीः कुमारीश्चावाह्य यागुंगूर्यासिनीवालीयाराकायासरस्वती ॥ इंद्राणीमह्वऊतयेवरुणानींस्वस्तये इतिमंत्रेण । यद्वा । देवींवाचमजनयंतदेवास्तांविश्वरूपाः पशवोवदंति ॥ सानोमंद्रेषमूर्जंदुहानाधेनुर्वागस्मानुपसुष्टुतैतु इतिमंत्रेणाऽऽवाहितदेवताः षोडशोपचारैरभ्यर्च्यद्विजंवृत्वायथाविभवंवस्त्रालंकारादिभिः पूजयेत् ॥ अद्येत्यादि० संकल्पोक्तफलंसंकीर्त्यइदंपुस्तकंप्रतिमायुतंससिंहंऊर्णापट्टबद्धंहढसूत्रवेष्टितंनागमययंत्रेस्थितंयथाशक्तिसोपस्करंसरस्वतीदैवतं गोत्रायशर्मणेसुपूजिताय तुभ्यमहंसंप्रददेनममेति ॥ मंत्रौतु ॥ सर्वविद्याश्रयायस्माः करणंलिखिताक्षरं ॥ पुस्तकस्यप्रदानेनप्रीणातुममभारती ॥ सरस्वतिजगन्मातः शब्दब्रह्माधिदेवते ॥ अस्याः प्रदानाद्वागीशाप्रसन्नाजन्मजन्मनि ॥ ततः सुवर्णंदक्षिणांदद्यात् ॥ इतिपुस्तकदानं ॥ अथरत्नदानं ॥ भविष्ये । माणिक्यंपद्मरागंचवैदूर्यंपद्ममेवच ॥ मारकतंचगोमेदंपुष्परागंचमौक्तिकं ॥ हरितंचनवैतानिरत्नान्युक्तानिसूरिभिः इति॥

रत्नदानाद्धरिर्लक्ष्मीःस्वपदंचप्रयच्छति इति॥अद्येत्यादि० लक्ष्मीनारायणपदावासिकामः० ॥ मंत्रस्तु ॥ यस्माद्रत्नेपुसर्वेषुसर्वेदेवाव्यवस्थिताः ॥ तस्माद्रत्नप्रदानेनवांछितंफलमश्नुते ॥ इतिनवरत्नदानानि ॥ मौक्तिकमंत्रस्तु । मौक्तिकंभूषणंविष्णोः श्रियोगौर्योःशिवस्यच ॥ दानेनास्यसुखंचास्तुऐहिकामुष्मिकंममेति ॥ अथप्रवालदानमंत्रस्तु ॥ प्रवालंपुष्टिदंश्रीदंकांतिदंशुभदंतथा ॥ दानेनास्यमहत्सौख्यंशांतिरस्तुसदामम इति ॥ अथकर्णभूषणदानमंत्रस्तु । भूषणंकर्णयोः स्त्रीणांस्वर्णरत्नादिसंयुतं ॥ ताटंकस्य प्रदानेनसौभाग्यंवर्धतांमम इति अथमांगल्यमणिदानमंत्रस्तु ॥ मांगल्यमणयोलक्ष्म्यागौर्योः प्रीतिकराः सदा ॥ तस्मादेषां प्रदानेनशांतिरस्तुसदाममेति ॥ हरिद्रादानमंत्रस्तु ॥ गौर्याःप्रीतिकरानित्यंहरिद्रासर्वकामदा ॥ तस्मादस्याःप्रदानेनसौभाग्यंजन्मजन्मनि इति ॥ कुंकुमदानमंत्रस्तु ॥ कुंकुमंशोभनंरम्यंसर्वदामंगलप्रदं ॥ दानेनास्यमहत्सौख्यंसौभाग्यंस्यात्सदामम इति॥सिंदूरदानमंत्रस्तु सिंदूरंशोभनंरम्यंगणेशस्यप्रियंपरं ॥ दानेनास्यपरालक्ष्मीः स्थिरामेचास्तुसंतति रिति ॥ कस्तूरीदानमंत्रस्तु ॥ कस्तूरीभोगदाभव्यादेवमर्त्यजनप्रिया ॥ दानेनास्याः सुखंभोगः शांतिरस्तुसदामम ॥ इति ॥ कर्पूरदानमंत्रस्तु ॥ कर्पूरंशीतलंचारुदेवर्षिगुरुसेवितं ॥ तस्माद

स्यप्रदानेनलक्ष्मीस्तिष्ठतुमद्गृहे ॥ तथा ॥ कर्पूरंरुचिरंविप्रगृहाणेमंसुपूजितं ॥ पुण्यगंधस्थितासामेकमलाप्रीयतामिति ॥ नानासुगंधद्रव्यदानमंत्रस्तु ॥ गंधोमनोहरोदिव्यः शांतिदःसुखदस्तथा ॥ तस्मादस्यप्रदानेनसुगंधःस्यात्सदाममइति ॥ इतिभविष्यपुराणोक्तनानाद्रव्यदानमंत्राः ॥ अथदेवेगलंतिकादानं ॥ भविष्यपुराणे । वसंतसमयंज्ञात्वागत्वादेवालयंशुभं ॥ शिवस्य विष्णोरर्कस्यइष्टदेवस्यवापुनः ॥ स्रवंतंकारयेत्कुंभंसच्छिद्रंदेवमस्तके ॥ दिवारात्रौस्रवेदेवंजलंमासचतुष्टयं ॥ स्रवत्तद्बिंदुसंख्याकान्स्वर्गलोकेमहीयते ॥ अत्रप्रयोगस्तु ॥ वसंतेशुभदिनेस्थिरलग्नादौकृतनित्यक्रियः आचम्यप्राणानायम्य अद्येत्यादि० देवशिरसिस्रवज्जलबिंदुसमसंख्याकाब्दशिवपुरादिनिवासकामोमासचतुष्टयंदिवारात्रौ च देवेगलंतिकादानंकरिष्ये इतिसंकल्प्य ॥ प्रासादंसम्यक्प्रक्षाल्यदेवंपंचामृताद्युपचारैरभ्यर्च्यदेवेगलंतिकांबध्नीयात् ॥ मंत्रस्तु । स्कांदे ॥ ॐ नमः शंकरः शंभुर्भवोधाताशिवोहरः ॥ प्रीयतांमेमहारुद्रोजलसेकप्रदानतः इति ॥ एवंमासचतुष्टयंदेवेगलंतिकादानंकृत्वाअंतेप्येवंपंचामृतादिपूजांकृत्वायथाशक्तिब्राह्मणान्भोजयित्वातेभ्योदक्षिणांदद्यादिति ॥ त्रयाणामपिजीवानामुदकंजीवनंस्मृतं ॥ पवित्रममृतंयस्मात्तद्देयंपुण्यमिच्छता इति ॥ इतिस्कांदोक्तंदेवेगलंतिकादानं॥अथप्र

पादानम् ॥ भविष्ये ॥ अतीतेफाल्गुनेमासिप्राप्तेचैत्रमहोत्सवे ॥ पुण्येह्निविप्रकथितेमंडपं कारयेत्ततः ॥ इति ॥ पुरमध्येचतुष्पथेजलरहितमार्गेवृक्षमूलेप्रपामंडपंकारयित्वातन्मध्ये सुगंधकान्जलकुंभान्संस्थाप्यप्रपापालकंबहुपुत्रंसंस्थाप्यप्रार्थयेत् ॥ प्रपेयंसर्वसामान्याभूते भ्यःप्रतिपादिता ॥ अस्याःप्रदानात्सकलाममसंतुमनोरथाः इति ॥ ततोऽनिवारितंदेयंतोयं मासचतुष्टयं ॥ त्रिपक्षंवामहाराजजीवानांजीवनंपरं ॥ प्रत्यहंकारयेत्तस्यांभोजयेच्छक्तितोद्वि जान् ॥ अनेनविधिनायस्तुग्रीष्मेतापप्रणाशनं ॥ पानीयमुत्तमंदद्यात्तस्यपुण्यफलंशृणु॥क पिलाशतदानस्यसम्यग्दत्तस्ययत्फलं ॥ तत्फलंसमवाप्नोतिसर्वदेवैःसुपूजितः इति ॥ इति प्रपादानं ॥ अथहैमंतिकेऽग्निदानं ॥ भविष्ये ॥ अग्निंहेमंतशिशिरऋतौतीर्थेसुरालये ॥ मठे देवालयेचैवअग्निंप्रज्वालयेत्तुयः ॥ षष्टिवर्षसहस्राणिस्वर्गलोकेमहीयतेइति ॥ तथाप्रज्वालये द्वह्निंसेवनार्थंद्विजन्मनां ॥ दातव्योदीपकोऽखंडोदेवमुद्दिश्यमाधवम् ॥ इतिमाधवोक्तेश्च ॥ इतिहेमंतशिशिरऋतावग्निदानं ॥ अथदीपदानं ॥ संवर्तः । देवागारेद्विजागारेदीपंदत्वाच तुष्पथे ॥ मेधावीज्ञानसंपन्नश्चक्षुष्मांश्चसदाभवेत् इति ॥ तथोत्तरायणेदीपदानमतिप्रशस्तं॥ मंत्रस्तु॥दीपदानप्रदोनित्यंदेवतानांप्रियःसदा ॥ दानेनास्यभवेत्सौख्यंशांतिमेवांछितंफलं ॥

सज्योतिस्तैलपात्रंचदीपंबाहुसमुन्नतं ॥ सुखंस्यादस्यदानेनशांतिरस्तुसदामम इति ॥इतिदी
पदानं ॥ अथपांथपरिचर्या॥भविष्ये । पांथंपरिचरेद्यस्तुशयनासनभोजनैः ॥ सस्वल्पेनप्रयासे
नजयतिक्रतुयाजिनम् इति ॥ तथा । अप्रणोद्योऽतिथिः सायमपिवाभूतृणोदकैः । इतियाज्ञ
वल्क्यः ।प्रचेताअपि । यः प्रातर्वैश्वदेवांतेसायंवागृहमागतः ॥ देववत्पूजनीयोऽसौसूर्योढः
सोतिथिःस्मृतः ॥ इति । तथा । दिवातिथौतुविमुखेगतेयत्पातकंनृणां ॥ तदेवाष्टगुणंपुंसांसू
र्योढेविमुखेगते ॥ तस्मात्स्वशक्त्याराजेंद्रसूर्योढ मतिथिंनरः ॥ पूजयेत्पूजितेतस्मिन्पूजिताः
सर्वदेवताः ॥ इति ॥ इतिपांथपरिचर्या ॥ अथगोपरिचर्या ॥ विष्णुः । गवांकंडूयनंचैवसर्वकल्म
षनाशनं ॥ गवांग्रासप्रदानेनस्वर्गलोकेमहीयते इति ॥ ग्रासप्रदानमंत्रस्त्वपरार्के॥सुरभित्वंजग
न्मातर्नित्यंविष्णुपदेस्थिता ॥ सर्वदेवमयेग्रासंमयादत्तमिमंग्रस॥प्रार्थनामंत्रस्तु । ततः । सर्वदे
वमयेदेविसर्वदेवैरलंकृते ॥ मातर्ममाभिलषितंसफलंकुरुनंदिनि ॥ इतिप्रार्थयेत् ॥ इतिगोपरि
चर्या ॥अथधर्मघटदानं ॥ विष्णुः । शीतलेनसुगंधेनवारिणापूरितंघटं ॥ शुक्लचंदनलिप्तांगं
पुष्पदामोपशोभितं ॥ दध्योदनभृतंकुर्याच्छरावंतस्यचोपरि ॥ उपानच्छत्रसंयुक्तंधर्माख्यं
कल्पयेद्घटम् ॥ पुष्पाक्षतान्गृहीत्वातुइमंमंत्रमुदीरयेत् ॥ नमोस्तुविष्णुरूपायनमः सागरसं

भव ॥ अपांपूर्णोद्धरास्मांस्त्वंदुःखसंसारसागरात् इति ॥ प्रार्थनामंत्रस्तु । उदकुंभोमयाद
त्तोग्रीष्मकालेदिनेदिने ॥ शीतोदकप्रदानेनप्रीयतांमधुसूदनः इति ॥ भविष्ये । प्रत्यहंधर्मे
घटकोवस्त्रसंवेष्टितोनवः ॥ ब्राह्मणस्यगृहेदेयः शीतामलजलः शुचिः ॥ वसंतग्रीष्मयोर्मे
घ्येपानीयं यः प्रयच्छति ॥ पलेपलेसुवर्णस्यफलमाप्नोतिमानवः॥ मार्गशीर्षात्समारभ्यउदकुं
भंतुयः क्षिपेत् ॥ दिनेदिनेसहस्रस्यगवांदानफलंलभेत् इति ॥ उद्यापनंतुमासिमासिकार्यं ॥
भविष्ये । मंडकावेष्टिकाभिश्चपक्वान्नैः सर्वकामिकैः ॥ उद्दिश्यशंकरंविष्णुंब्रह्माणमथवापितॄ
न् ॥ ततः सतिलंप्रोक्ष्यानेनमंत्रेणदद्यात् । एपधर्मघटोदत्तोब्रह्माविष्णुशिवात्मकः ॥ अस्यप्र
दानात्सकलाममसंतुमनोरथाः इति ॥ अनेनविधिनायस्तुधर्मकुंभंप्रयच्छति ॥ वसंतग्रीष्म
समयेगोप्रदानफलंलभेत् इति ॥ इतिधर्मघटदानं ॥ कलशदानमंत्रस्तु ॥ कलशः
शुभदोभव्योजलेनपरिपूरितः ॥ दानेनास्यमहत्सौख्यंशांतिरस्तुसदामम इति ॥ जलपात्रदा
नमंत्रोऽपि ॥ वारिणापूरितंपात्रंतापत्रयहरंशुभं ॥ देवर्षिपितृतृप्त्यर्थंगृहाणसुरसत्तम ॥ इति॥
अथयज्ञोपवीतदानं ॥ बौधायनः । यज्ञोपवीतदानेनजायतेब्रह्मवर्चसी ॥ तस्मात्तानिप्रदेया
निब्राह्मणेभ्योविपश्चिता इति ॥ इत्युपवीतदानं ॥ हेमाद्रौ । माघेतिलदानात्पापनाशः ॥ या

म्यलोकजयकामश्चफाल्गुनेप्रियंगुदानाल्लक्ष्मीवान्भवति ॥ चैत्रेचित्रवस्त्रदानात्सौभाग्यवा
न् ॥ वैशाखेअपूपदानात्स्वर्गलोकावाप्तिः ॥ ज्येष्ठेछत्रदानात्सर्वान्कामानवाप्नोति ॥ आषाढेचं
दनकर्पूरदानात्फलातिशयः । श्रावणेवस्त्रदानान्महाफलं । भाद्रेफाणितदानात्फलातिशयः ।
फाणितंलोकेकाकवीतिप्रसिद्धा । आश्विनेघृतदानेनरूपवान् । कार्तिकेदीपान्नदानाद्धानर्घफ
लम् । मार्गशीर्षेलवणदानाद्रूपवान् । पौषेस्वर्णदानात्तुष्टिमान् । सर्वमासशुक्लपक्षेषुपु
ष्पदानान्महालक्ष्मीमवाप्नुयात् ॥ कृष्णपक्षेषुफलदानात्फलातिशयः ॥ इतिमासपक्षदा
नानि ॥ अथाधिमासेदानम् ॥ हेमाद्रौपाद्मे । अधिमासेतुसंप्राप्तेगुडसर्पिर्युतानिच ॥ चंद्रवद्व
र्तुलान्यंगव्रीहिपिष्टकृतानिच ॥ साज्यानिदधिमिश्राणिअधिमासेनृपोत्तम ॥ त्रयस्त्रिंशदपूपानि
दातव्यानिदिनेदिने ॥ व्यतीपातदिनेयद्वाद्वादश्यामथवानृप ॥ पौर्णमास्याममायांवानवम्यां
वानृपोत्तम ॥ अष्टम्यामथपंचम्यांकुर्याद्व्रतमनुत्तमम् ॥ अधिमासेतुसंप्राप्तेत्रयस्त्रिंशत्तुदेव
ताः ॥ उद्दिश्यापूपदानेनपृथ्वीदानफलंलभेत् ॥ देवतानामानितुभविष्ये ॥ विष्णुं १ जि
ष्णुं २ महाविष्णुं ३ हरिं ४ कृष्ण ५ मधोक्षजं ६ केशवं ७ माधवं ८ राम ९ मच्युतं १०
पुरुषोत्तमं ११ ॥ गोविंदं १२ वामनं १३ श्रीशं १४ श्रीकंठं १५ विश्वसाक्षिणं १६ ॥ नारा

यणं १७ मधुरिपु १८ मनिरुद्धं १९ त्रिविक्रमं २० ॥ वासुदेवं २१ जगद्योनि २२ मन
तं २३ शेषशायिनं २४ ॥ संकर्षणंच २५ प्रद्युम्नं २६ दैत्यारिं २७ विश्वतोमुखं २८ ॥ जना
र्दनं २९ धरावासं ३० दामोदर ३१ मघार्दनं ३२ ॥ श्रीपतिं ३३ चत्रयस्त्रिंशदु
द्दिश्यप्रतिनामभिः ॥ त्रयस्त्रिंशदपूपानिकांस्यपात्रेनिधायच ॥ सघृतंसहिरण्यंच ब्राह्मणायनि
वेदयेत् ॥ अद्येत्यादि० ममेहफलावाप्तिविष्ण्वादिश्रीपत्यंताः त्रयस्त्रिंशद्देवताउद्दिश्यश्रीपु
रुषोत्तमभास्करप्रीतयेइदंवायनकंत्रयस्त्रिंशदपूपोपेतकांस्यपात्रंससुवर्णघृततांबूलदक्षिणादि
सोपस्करं श्रीविष्णुरूपायब्राह्मणायगोत्रायशर्मणेसुपूजितायतुभ्यमहंसंप्रददेनममेतिदद्यात् ॥
दानमंत्रस्तु ॥ विष्णुरूपीसहस्रांशुः सर्वपापप्रणाशनः ॥ अपूपान्नप्रदानेनममपापंव्यपोहतु ॥
नारायणजगद्बीजभास्करप्रतिरूपक ॥ दानेनानेनपुत्रांश्चसंपदंचाभिवर्धय ॥ यस्यहस्तेगदा
चक्रेगरुडोयस्यवाहनं ॥ शंखः करतलेयस्यसमेविष्णुः प्रसीदतु ॥ कलाकाष्ठादिरूपेणनिमे
षघटिकादिना ॥ योवंचयतिभूतानितस्मैकालात्मनेनमः ॥ कुरुक्षेत्रमयंदेशः सूर्यपर्वद्विजो
हरिः॥ पृथ्वीसममिदंदानंगृहाणपुरुषोत्तम ॥ मलानांचविशुद्ध्यर्थंपापप्रशमनायच ॥ पुत्र
पौत्राभिवृद्ध्यर्थंप्रदत्तंतवभास्कर ॥ मंत्रैरेतैश्चयोदद्यात्त्रयस्त्रिंशदपूपकान् ॥ प्राप्नोतिविपुलां

लक्ष्मींपुत्रपौत्रादिसंततिम् ॥ इत्युक्तंमहाभारते ॥ एतन्मलमासव्रतंतुदानरूपंसर्वेषांनित्यं ॥
मलमासंयदाप्राप्यसंध्योपासनतर्पणं ॥ श्राद्धादिनियमंजाप्यंनिष्फलंतद्व्रतंविना इति॥भविष्ये
अकरणेप्रत्यवायोक्तिश्च॥इत्यधिमासेदानरूपव्रतं॥अथप्रातर्नित्यंघृतपात्रछायादानं॥भविष्ये॥
कांस्यपात्रेस्थिताज्यंचआत्मरूपंनिरीक्ष्यतु ॥ ससुवर्णंतुयोदद्यात्सर्वविघ्नोपशांतये ॥अद्येत्या
दि० ममैतच्छरीरावच्छिन्नसमस्तपापक्षयसर्वग्रहपीडाशांतिशरीरोत्थार्तिनाशाय प्रसादर्वा
छायुरारोग्यादिसर्वसौभाग्यप्राप्तयेसौख्यप्राप्तयेवाइदंस्वदेहछायावीक्षिताज्यपूरितकांस्यपात्रं
ससुवर्णंविष्णुदैवतं गोत्रायशर्मणेसुपूजितायतुभ्यमहंसंप्रददेनममेति ॥ मंत्रौतु ॥ यालक्ष्मीर्यं
च्चमेदौस्थ्यंसर्वांगसमुपस्थितं॥तत्सर्वंनाशयाज्यत्वंश्रियमायुश्चवर्धय ॥आज्यंतेजःसमुद्दिष्टमा
ज्यंपापहरंपरं॥आज्यंसुराणामाहारःसर्वमाज्येप्रतिष्ठितं॥आज्यपात्रप्रदानेनशांतिरस्तुसदाम
म ॥इतिनित्यछायादानं॥अथसंक्रांतिदानं॥विश्वामित्रः॥ मेषसंक्रमणेभानोर्मेषदानंमहाफलं॥
वृषसंक्रमणेदानंगवांप्रोक्तंतथैवच ॥ वस्त्रान्नदानपानानिमिथुनेविहितानितु ॥ घृतधेनुप्रदा
नंतुकर्कटेचविशिष्यते ॥ सिंहेचविहितंपात्रंदद्याद्धैमससुवर्णकं ॥ कन्याप्रवेशेवस्त्राणांसुरभी
णांतथैवच॥ तुलाप्रवेशेधान्यानांबहुबीजफलान्यपि ॥ कीटप्रवेशेवस्त्राणांवेश्मनांदानमेवच॥

कीटोवृश्चिकः॥ धनुः प्रवेशेवस्त्राणांयानानांदानमुच्यते ॥ झषप्रवेशेदारूणांदानमग्नेस्त
थैवच ॥ झषोमकरः ॥ कुंभप्रवेशेदानंतुगवामंबुतृणस्यच ॥ मीनप्रवेशेह्यम्लानमालानाम
पिचोत्तमम् ॥ दानान्यथैतानिमयाद्विजेंद्रप्रोक्तानिकालेतुनरश्चदत्वा ॥ प्राप्नोतिकामंमनसि
स्वभीष्टंतस्मात्प्रशंसंतिहिकालदानम् इति ॥ अत्रकालःसमयः ॥ इतिसंक्रांतिदानानि॥
अथनानाधान्यदानमंत्राः ॥ हेमाद्रौदानकांडे । देयंतद्योजयेत्पूर्वंततोविप्रंप्रपूजयेत् ॥ त
त्मंत्रैः प्रदद्याद्वै सर्वदानेष्वयंविधिः इति ॥ तत्रादौतंडुलदानमंत्रः । पावनाः सर्वयज्ञे
षुप्रशस्ताहोमकर्मणि ॥ तंडुलानांप्रदानेनप्रीयतामग्निदेवता ॥ तथा ॥ व्रीहिजास्तंडुलाः शु
द्धाः पितृदेवद्विजप्रियाः ॥ तस्मादेषांप्रदानेनसर्वकामाश्चमेसदा ॥ व्रीहिदानमंत्रस्तु ॥ ब्रह्म
णानिर्मिताः पूर्वंव्रीहयोयज्ञसाधनाः ॥ अनेनव्रीहिदानेनममसंतुमनोरथाः इति ॥ यवदानमंत्र
स्तु ॥ धान्यराजाश्चमांगल्येद्विजप्रीतिकरायवाः ॥ तस्मादेषांप्रदानेनममास्त्वभिमतंफलं ॥
तथा ॥ पूर्वमेवहियज्ञार्थंनिर्मिताब्रह्मणायवाः ॥ अनेनयवदानेनशांतिरस्तुसदामम इति ॥ गो
धूमदानमंत्रस्तु ॥ धान्यचूडामणेर्जंबूद्वीपेगोधूमसंभवः ॥ गंधर्वे सौख्यतृप्तिः स्यादतः

पांप्रदानेनशांतिःस्वस्त्ययनंमम इति ॥ माषदानमंत्रस्तु ॥ यस्मान्मधुवधेकाले विष्णुदेहसमुद्भवाः ॥ पितॄणांतृप्तिदामाषाअतः शांतिंप्रयच्छमे ॥ चणकदानमंत्रस्तु ॥ पुरागोवर्धनोद्धारसमयेकृष्णभक्षिताः ॥ चणकाः सर्वपापघ्ना अतः शांतिंप्रयच्छमे ॥ कुलित्थदानमंत्रस्तु । अग्निगर्भोद्भवाः सौम्या बलारोग्ययशःप्रदाः ॥ कुलित्थानांप्रदानेनशांतिरस्तुसदामम इति ॥ तिलदानमंत्रस्तु । तिलाः पापहरानित्यंविष्णुदेहसमुद्भवाः ॥ तस्मादेषांप्रदानेनपापनाशनमुच्यते इति ॥ स्वर्णतिलदानमंत्रस्तु । तिलाः स्वर्णमयादेवदुरितक्षयकारकाः ॥ विष्णुप्रीतिकरानित्यमतःशांतिंप्रयच्छमे ॥ अथसामान्यतः सर्वधान्यमंत्रस्तु । धान्यंकरोतिदातारमिहलोकेपरत्रच ॥ तस्मादस्यप्रदानेनममसंतुमनोरथा इति ॥ ससुवर्णतिलपात्रदानमंत्रस्तु । तिलाः पुण्याः पवित्राश्चसर्वपापहराः शुभाः ॥ शुक्लाश्चैवतथाकृष्णाविष्णुगात्रसमुद्भवाः ॥ यानिकानिचपापानिब्रह्महत्यासमानिच ॥ तिलपात्रप्रदानेनतानिनश्यंतुमेसदेति ॥ निष्पावदानमंत्रस्तु ॥ निष्पावानिर्मिताः पूर्वंलोकानांहितकाम्यया ॥ तस्मादेषांप्रदानेनममपापंव्यपोहतु इति ॥ प्रियंगुदानमंत्रस्तु । प्रियंगवःप्रियायस्मादग्नेश्चहव्यसाधनाः ॥ तस्मादेषांप्रदानेनप्रीणातुपुरुषोत्तमः इति ॥ श्यामाकदानमंत्र

स्तु । श्यामाकास्तुसदापुण्याः पवित्रायज्ञसाधनाः ॥ अतस्तेषांप्रदानेनपावकोवरदःसदा इति ॥ कोद्रवदानमंत्रस्तु । कोद्रवानिर्मितादेवैः प्राणिनाजीवनायवै ॥ तस्मादेषांप्रदानेनप्रीणातुपुरुषोत्तमः इति ॥ ळंकदानमंत्रस्तु । वातप्रवर्धकाळंकाबलदाः पुष्टिकारकाः ॥ प्राणिप्रीतिकरानित्यमतः शांतिप्रयच्छमे ॥ यावनालदानमंत्रस्तु । यावनालाः प्रीतिकराः कांतिपुष्टिबलप्रदाः ॥ तस्मादेषांप्रदानेनसस्यपूर्णगृहंमम इति ॥ अथमसूरिकादानमंत्रस्तु । सवल्कलामसूरास्तुदुरितक्षयकारकाः ॥ तस्मादेषांप्रदानेनविष्णुः प्रीतिंकरोमम इति ॥ सामान्यधान्यमंत्रस्त्वत्रनोप्यइतिहेमाद्रौनानाधान्यमंत्राः ॥ अथान्नदानमंत्राअपितत्रैव ॥ आदौपायसदानमंत्रस्तु ॥ पायसंशर्करायुक्तंसघृतंकांस्यभाजने ॥ प्रदानान्मेफलंचास्तुऐहिकामुष्मिकंचयत् इति ॥ क्षीरकमंडलुदानमंत्रस्तु ॥ सूर्यमंडलसंभूतागव्यदुग्धयुताः प्रियाः ॥ जनार्दनादिदेवानामतःपाहिसनातन इति ॥ ओदनमंत्रस्तु । अन्नंब्रह्ममयंसाक्षान्नराणांजीवरक्षणं ॥ ओदनस्यप्रदानेनममसंतुमनोरथाः इति ॥ दध्यन्नदानमंत्रस्तु । चंद्रमंडलमध्यस्थंचंद्रांशुदसमप्रभं ॥ दध्यन्नंचास्यदानेनप्रीयतांवामनोमम इति ॥ कृसरान्नदानमंत्रस्तु । कृसरान्नंस्वादुवर्यंदेवानांप्रीतिवर्धनं ॥ घृतव्यंजनसंयुक्तंदत्वारोगैर्विमुच्यते इति ॥

नानाभक्ष्यदानमंत्रस्तु । केशवस्यप्रियाभक्ष्याः शंभुब्रह्मादितुष्टिदाः ॥ पृथग्विधापूपकाद्या यच्छंतुचलमौरसम् इति ॥ सर्वान्नदानमंत्रस्तु । अन्नमेवयतोलक्ष्मीरन्नमेवजनार्दनः ॥ अन्नंब्रह्माखिलत्राणमस्तुमेसर्वजन्मनि इति॥इतिहेमाद्र्युक्तान्नदानमंत्राः ॥ अन्येऽपिकेचनमंत्रास्तत्रत्याएव ॥ सक्तुदानमंत्रस्तु । प्राजापत्यायतः प्रोक्ताः सक्तवोयज्ञकर्मणि ॥ तस्मादेषांप्रदानेनप्रीयतांमेप्रजापतिः इति ॥ शर्करादानमंत्रस्तु । अमृतस्यकुलोत्पन्नाइक्षवोऽप्यथशर्करा॥ सूर्यप्रीतिकरानित्यमतःशांतिंप्रयच्छमे॥तथा। शर्करेक्षुरसोद्भूतासदास्वादुकराप्रिया ॥ दानेनास्यास्तुमेनित्यंतुष्टाःस्युर्द्विजदेवताःइति॥गुडदानमंत्रस्तु। प्रणवःसर्वमंत्राणांनारीणांपार्वती यथा ॥ तथारसानांप्रवरः सदैवेक्षुरसोमतः ॥ ममतस्मात्परांशांतिंददस्वगुडसर्वदा इति ॥ इक्षुदंडदानमंत्रस्तु । इक्षुदंडगुरुतरंरसालंसर्वकामदं ॥ दानेनानेनतस्याशुप्रीयतांपरमेश्वरः इति ॥ मधुदानमंत्रस्तु । यस्मात्पितॄणांश्राद्धेषुपीतंमध्वमृतोद्भवं ॥ सदातस्यप्रदानेनमोक्षःस्याद्दुःखसागरात् ॥ घृतदानमंत्रः । कामधेनोःसमुद्भूतंदेवानामुत्तमंहविः ॥ आयुर्विवर्धनंदातुराज्यंपातुसदैवमाम् इति ॥ तैलदानमंत्रः । तैलंपुष्टिकरंनित्यमायुर्वृद्ध्यघनाशनं ॥ अमांगल्यहरंश्रीमदतः शांतिंप्रयच्छमे इति ॥ नवनीतदानमंत्रस्तु । कामधेनोः समुद्भूतंविष्णोः

प्रीतिकरंपरं ॥ नवनीतप्रदानेनबलंपुष्टिंचमेऽच्युतेति ॥ तथा । क्षीरार्णवसमुद्भूतंविष्णोस्तुष्टि करंसदा । नवनीतप्रदानेनवांछितंचास्तुमेसदा इति ॥ क्षीरदानमंत्रः । अलक्ष्मीहरणंनित्यंसौ भाग्यबलवर्धनं।क्षीरंमंगलमायुष्यमतःशांतिंप्रयच्छमे॥तथा ।शिशूनांजीवनंक्षीरंपितृदेवप्रियंस दा॥कांतिदंपुष्टिदंनित्यमतःशांतिंप्रयच्छमे इति ॥दधिदानमंत्रः।क्षीरेणाम्लंसमुद्भूतंदेवर्षिपितृ तृप्तिदं॥दधिस्यान्मेऽमृतंनित्यमतःशांतिंप्रयच्छमे इति ॥ तक्रदानमंत्रः तक्रंदधिसमुद्भूतंप्राणि नांतृप्तिदंपरं॥अतस्त्वस्यप्रदानेनशांतिरस्तुसदामम इति॥पुष्पदानमंत्रः।मनोहराणिपुष्पाणि सदादेवप्रियाणिच ॥ अतस्तेषांप्रदानेनममसंतुसुराःप्रियाः इति ॥ फलदानमंत्रः।मनोहराणि रम्याणिनित्यंस्वादुकराणिच॥फलानांसंप्रदानेनसंततिस्त्वमलामम ॥ इति । तथा । फलानि मधुराणीक्षुनिदेवप्रियाणिच ॥तस्मात्तेषांप्रदानेनसफलामेमनोरथाः इति ॥तांबूलदानमंत्रः। सोपस्करंचतांबूलंसर्वदामंगलंप्रियं ॥ प्रियंचैवतुदेवानांसौगंध्यंवदनेऽस्तुमे इति ॥ पादुका दानमंत्रः । कंटकोच्छिष्टपाषाणवृश्चिकादिनिवारणे ॥ पादुकेसंप्रदत्तेमेद्विजप्रीत्याप्रगृह्यताम् इति ॥ उपानद्दानमंत्रः । उपानहौप्रदत्तेमेकंटकादिनिवारणे ॥ सर्वमार्गेषुसुखदेअतः शांतिंप्रयच्छमे ॥ छत्रदानमंत्रः । इहामुत्रातपत्राणंकुरुमेकेशवप्रभो ॥ छत्रंत्वत्प्रीतयेद

त्वंममास्तुचसदाशुभम् इति ॥ चामरदानमंत्रः । शशांककरसंकाशंहिमडिंडीरपांडुरं ॥ प्रोत्सारयाशुदुरितंचामरामरवल्लभ इति ॥ पत्रिकादानमंत्रः । पत्रिकासर्वजंतूनांशैत्यानंदकरीशुभा ॥ देवेंद्रप्रीतयेदत्ताअतःशांतिंप्रयच्छमे इति ॥ व्यजनदानमंत्रः । व्यजनंवायुदेवत्यंग्रीष्मकालेसुखप्रदं ॥ अस्यप्रदानात्सकलाममसंतुमनोरथाः इति ॥ दर्पणदानमंत्रः ॥ दर्शनेनत्वमादर्शनृणांमंगलदायकः ॥ सर्वसौभाग्यसत्कीर्तिर्निर्मलंज्ञानमस्तुमे ॥ अथकूष्मांडादिदानं ॥ भविष्ये । ब्रह्महत्यादिपापघ्नंकूष्मांडंसुखसौख्यदम् ॥ कार्तिकेरथसप्तम्यांदद्यात्पुण्यदिनेष्वपि इति ॥अद्येत्या०ममब्रह्महननादिसमस्तपापक्षयपूर्वकबहुपुत्रपौत्रसौभाग्यादिसकलमनोरथावाप्तिकूष्मांडबीजसमसहस्रसंख्याकाब्दब्रह्मलोकनिवाससिद्धये इदंकूष्मांडफलंबहुबीजाढ्यंघृतप्लुतंतिललिप्तंमुक्ताप्रवालरत्नहेमफलतांबूलवस्त्रादियुतंगोधूमराशिस्थितंवनस्पतिदैवतंसुवर्णदक्षिणायुतंगोत्रायशर्मणेसुपूजितायतुभ्यमहंसंप्रददेनममेतिद्विजहस्तेफलंदद्यात् ॥ दानमंत्रस्तुतत्रैव । ब्रह्महत्यादिपापघ्नंब्रह्मणानिर्मितंपुरा ॥ कूष्मांडंबहुबीजाढ्यंपुत्रपौत्रादिवृद्धिदं ॥ मुक्ताप्रवालहेमादियुक्तंदत्तंतवाद्विज ॥ अनंतपुण्यफलदमतः शांतिंप्रयच्छमे ॥ इतिकूष्मांडदानं ॥ अथदेशविशेषेणमकरसंक्रांतौसौभाग्यवतीनांदान

विशेषउक्तोहेमाद्रौव्यासेन ॥ सौभाग्यद्रव्यदानंचस्त्रीभिः कार्यं प्रयत्नतः ॥ सभर्तृकाभिः सं
क्रांतौफलादीनांमृगेरवौ ॥ दानंषोडशसंख्याकमेकैकस्यफलस्यच॥ हैमराजतकांस्यानांभा
जनानियथाभवेत् ॥ वर्धितफलदानमंत्रः ॥ सतिलंगुडसंयुक्तंरसप्रीतिकरंनृणां ॥ वर्धितंसंगृ
हाणेदमतः शांतिंप्रयच्छमे इति ॥ सतिलगुडपिष्टग्रासदानमंत्रः ॥ मकरेकेतुसंप्राप्तेग्रासास्ति
लगुडोद्विजे ॥ दानेनपुत्रसौभाग्यंधनधान्यंसदास्तुमे ॥ भांडदानमंत्रः ॥ हिरण्यादीनिभांडा
निपात्राणिमृन्मयानिच ॥ गृहाणेमानिवैयस्माद्भास्करः प्रीयतांमम ॥ गोधूमपिष्टदानमंत्रः ।
गोधूमजनितंपिष्टंशर्कराघृतसंयुतम् ॥ द्विजवर्यगृहाणत्वमतः शांतिंप्रयच्छमे ॥ शूर्पस्था
द्रतंडुलदानमंत्रः ॥ तंडुलाः शालिजाः शुक्लाः सार्द्राः शूर्पेव्यवस्थिताः ॥ संप्रदानेनवैते
पांशांतिरस्तुसदामम ॥ पायसपूरितकांस्यपात्रदानमंत्रः ॥ सौभाग्यभाजनंकांस्यंपायसान्ने
नपूरितम् ॥ दानेनानेनसौभाग्यंशांतिरस्तुसदामम इति ॥ फलपुष्पसहितकदलीस्तंभदान
मंत्रः। कदलीसर्वदोषघ्नीहेमवर्णाचरावृता ॥ दानेनास्याःपुत्रपौत्रसौभाग्यंचास्तुमेसदा इति ॥
सौभाग्यद्रव्ययुतशूर्पदानमंत्रः॥ सकंचुकंवस्त्रयुग्मैस्तथाकर्णावतंसकैः ॥ कंठसूत्रादिशूर्पस्य
दानात्पातुशिवामम ॥ जानकीप्रीतयेशूर्पपंचकदानमंत्रः ॥ रामपत्निमहाभागेसौभाग्यद्र

न्यसंस्थिते ॥ गृहाणेमानिशूर्पाणिसोपस्कराणिजानकि ॥ सौभाग्यंभाग्यमारोग्यंसुतसौख्यं सदास्तुमे इति ॥ अथषोडशविप्रेभ्यःसांगषोडशषोडशफलदानानि ॥ भविष्यपुराणे । दानं षोडशसंख्याकमेकैकस्यफलस्यच ॥ एवंषोडशविप्रेभ्योदत्त्वेप्सितमवाप्नुयात् इति ॥ अद्ये त्यादि० ममसमस्तपापक्षयपूर्वकसकलसौभाग्यस्त्रीपुत्रपौत्रादीप्सिताऽनंतफलावाप्तयेदी यमानफलसमसंख्यवर्षसहस्रावच्छिन्नदेवांगनाभोगोत्तरानेकसुखावाप्तिकामश्च नानानामगो त्रेभ्यः षोडशसंख्याकेभ्यः सुपूजितेभ्यः ब्राह्मणेभ्यइमानिषोडशसंख्याकान्यमुकफ लान्येकैकस्मैसगोधूमतांबूलफलदक्षिणायुतानिवनस्पतिदैवतानिदातुमहमुत्सृजेनममेति द त्वाप्रणमेदिति ॥ दानमंत्रः॥फलैः षोडशसंयुक्तंस्वर्णधान्यादिसंयुतं ॥ द्विजवर्यगृहाणत्वंममसं तुमनोरथाःइति॥इतिषोडशिकाफलदानं॥अथव्यतीपातेसुवर्णदानमाह॥हेमाद्रौ ॥ शंकुकर्ण प्रलंबोष्ठलंबभ्रूर्दीर्घनासिक ॥ अष्टनेत्रचतुर्वक्त्रविस्तीर्णशतयोजन ॥ व्यतीपातनमस्तेऽस्तुसो मसूर्यसुतप्रभो ॥ यत्किंचिद्दीयतेस्वर्णंमेरुतुल्यंतुतद्भवेत् इति॥अद्येत्या०ममसमस्तपापक्षय पूर्वकहेमपर्वतहिमाचलदानसमफलावाप्त्यक्षय्यसुखश्रीसूर्यजनार्दनप्रीतयेइदंसुवर्णमग्निदैवतंस दक्षिणंगोत्रायशर्मणेसुपूजितायतुभ्यमहंसंप्रददेनममेति ॥ दानमंत्रः ॥ गुंजामात्रमिदंस्वल्पं

हेमाविप्रकरेऽर्पितं ॥ हिमाचलमितंभूत्वाप्रीयतामिजनार्दनः इति ॥ हिरण्यगर्भगर्भस्थ
मितिवा । इतिव्यतीपातेसुवर्णदानमंत्रः ॥ अथाश्वत्थसेवनं ॥ भविष्यपुराणे ॥ उदकुं
भप्रदानेतुअशक्तोयः पुमान्भवेत् ॥ तेनाश्वत्थतरोर्मूलंसेव्यंनित्यंजितात्मना ॥ सर्वपापप्रश
मनंसर्वदुःखविनाशनं ॥ सर्वरोगापहंनित्यंध्रुवंसंततिवर्धनं ॥ सेचनमंत्रः ॥ सिंचामितेऽश्वत्थ
मूलंममसंततिवृद्धये ॥ अश्वत्थरूपीभगवान्प्रीयतामिजनार्दनः ॥ अनेनमंत्रवर्येणसिंचेदश्वत्थ
मूलकं ॥ नमस्कुर्यात्ततः सम्यक्प्रार्थयेच्चपुनःपुनः इति ॥ सेचनफलमपितत्रैव॥यःकरोतितरो
र्मूलेसेकंमासचतुष्टयं ॥ मनोरथास्तुसिध्यंतिश्रुतिरेषासनातनी ॥ मासचतुष्टयंचैत्रादौ ॥ वै
शाखधर्मेपि । अश्वत्थमूलमासिंचेत्तोयेनबहुनासदा ॥ कुलानामयुतंतेनतारितंस्यान्नसंशयः
इति ॥ इत्यश्वत्थसेचनं ॥ अथाथर्वणीये अश्वत्थाभिमंत्रणं । आरात्तेइत्यस्याग्निका
डांतोयोनित्वनग्निऋषिः । वनस्पतिर्देवता अनुष्टुप्छंदः अश्वत्थाभिमंत्रणेविनियोगः ।
ॐ आरात्तेअग्निरस्त्वारात्परशुरस्तुते ॥ निर्वातेत्वाभिवर्षतुस्वस्तितेऽस्तुवनस्पते इति ॥
तेकारस्थानेमेकारः स्वयंवक्तव्यः ॥ पौराणमंत्रस्तु।अक्षिस्पंदंभुजस्पंदंदुःस्वप्नंदुर्विचिंतितं ॥
शत्रुतश्चसमुत्पन्नमश्वत्थशमयस्वमे ॥ पुराणांतरेमंत्रांतरमुक्तं ॥ मूलतोब्रह्मरूपायमध्यतोवि

ष्णुरूपिणे ॥ अग्रतः शिवरूपायअश्वत्थायनमोनमः इति ॥ अश्वत्थस्पर्शंतुमंदवासरएवकु
र्यात् ॥ अन्यवासरेष्वर्चनंसेचनंसेवनंचदूरतएवकुर्यादित्युक्तंपाद्मे ॥ इत्यश्वत्थसेचनविधिः॥
अथसूर्यादीनांवैषम्येदानान्युक्तानिज्योतिःसारे ॥ कौसुंभवस्त्रंगुडहेमताम्रंमाणिक्यगोधूमसुव
र्णपद्मं ॥ सवत्सगोदानमितिप्रणीतंदुष्टायसूर्यायमसूरिकाश्च ॥ इति सूर्ये १ ॥ घृतकलशंसित
वस्त्रंदधिशंखंमौक्तिकंसुवर्णंच ॥ रजतंचप्रदद्याच्चंद्रारिष्टोपशांतयेत्वरितं ॥ इतिचंद्रे २ ॥ प्रवा
लगोधूममसूरिकाश्ववृषंसताम्रंकरवीरपुष्पं ॥ आरक्तवस्त्रंगुडहेमताम्रंदुष्टायभौमायचरक्त
चंदनं ॥ इतिभौमे ३ ॥ नीलंवस्त्रंमुद्गहेमंबुधायरत्नंपाचिंदासिकांहेमसर्पिः ॥ कांस्यंदं
तंकुंजरस्याथमेषरौप्यंसस्यंपुष्पजात्यादिकंच ॥ इतिबुधे ४ ॥ अश्वः सुवर्णमधुपीतवस्त्रं
सपीतधान्यंलवणंसपुष्पं ॥ सशर्करंतद्रजनीप्रयुक्तंदुष्टायशांत्यैगुरवेप्रणीतं ॥ इतिगुरौ ५ ॥
चित्रवस्त्रमपिदानवार्चितेदुष्टगेसुनिवरैः प्रणोदितं ॥ तंडुलंघृतसुवर्णरूप्यकंवज्रकंपरिमलो
धवलागौः ॥ इतिशुक्रे ६ ॥ नीलकंमाहिषंवस्त्रंकृष्णलोहंसदक्षिणं ॥ विश्वामित्र्यायुतंद
द्याच्छनिदुष्टप्रशांतये ॥ इतिशनौ ॥ ७ ॥ राहोर्दानंकृष्णमेषोगोमेदोलोहकंबलौ ॥ सुवर्ण
नागरूपंचसतिलंताम्रभाजनं ॥ इतिराहौ ८ ॥ केतोर्वैदूर्यममलंतैलंमृगमदस्तथा ॥ ऊ

र्णांतिलैस्तुसंयुक्तंदद्यात्क्लेशापनुत्तये ॥ इति केतौ ९ ॥ इतिनवग्रहाणांदानद्रव्याण्युक्ता
नि ॥ अथग्रहाणांदानानि ॥ ब्राह्मे । ग्रहदानक्रमंवक्ष्येसर्वांसिद्धिकरंपरम् ॥ सर्वशांतिक
रंनृणांसर्वपापप्रणाशनम् इति ॥ दानकालमपितत्रैव । अयनेविषुवेचंद्रसूर्योपरागेजन्मर्क्षेभा
नुवासरेपंचदश्यांप्रातिकूल्येपुण्यकालेपुण्यदेशेविवाहादौचदानंकार्यम् ॥ तत्रायंप्रकारः । ह
स्तमात्रांद्विहस्तांवावेदींकृत्वागोमयेनोपलिप्य तत्रसर्वतोभद्रंपंचरंगैर्विलिख्य वस्त्रंतत्रप्रसार्यतं
डुलैस्तत्रनवकोष्ठात्मकंपद्मंकृत्वाकोष्ठेषुतंडुलैः पद्मानिकृत्वातेषुनिष्कत्रयेणयथाशक्त्यावा
सुवर्णप्रतिमाआदित्यादिग्रहाणांकृत्वाऽऽदौआदित्यंमध्यमेकोष्ठेआग्नेयेचंद्रंदक्षिणेभौममीशा
न्यांबुधमुत्तरेगुरुंपूर्वेशुक्रंपश्चिमेशनैश्चरंनैर्ऋत्येराहुंवायव्येकेतुंतत्तन्मंत्रैस्तत्तत्पुष्पैस्तत्तद्गंध
धूपदीपनैवेद्यादिभिः संपूज्यप्रार्थयेत् ॥ प्रार्थनामंत्राः । पद्मासनः पद्मकरोद्विबाहुःपद्मद्युतिः
पद्मतुरंगवाहः ॥ दिवाकरोलोकगुरुःकिरीटीमयिप्रसादंविदधातुदेवः ॥ १ ॥ श्वेतांबरःश्वेत
विभूषणश्चश्वेतद्युतिर्दंडकरोद्विबाहुः ॥ चंद्रोमृतात्मावरदः किरीटीश्रेयांसिमह्यंविदधातुदेवः
॥ २ ॥ रक्तांबरोरक्तवपुः किरीटीचतुर्भुजोमेषगतोगदाभृत् ॥ धरासुतः शक्तिधरश्चशूलीस
दाममस्याद्वरदः प्रशांतः ॥ ३ ॥ पीतांबरः पीतवपुःकिरीटीचतुर्भुजोदंडधरश्चहारी ॥ च

र्मासिधृक्सोमसुतः सदामेसिंहाधिरूढोवरदोबुधश्च ॥ ४ ॥ पीतांबरःपीतवपुःकिरीटीचतुर्भु
जोदेवगुरुः प्रशांतः ॥ दधातिदंडंचकमंडलुंचतथाक्षसूत्रंवरदोस्तुमह्यं ॥५॥ श्वेतांबरःश्वेत
वपुः किरीटीचतुर्भुजोदैत्यगुरुः प्रशांतः ॥तथाक्षसूत्रंचकमंडलुंचदंडंचबिभ्रद्वरदोऽस्तुमह्यं ६
नीलद्युतिः शूलधरः किरीटीगृध्रस्थितस्त्रासकरोधनुष्मान् ॥ चतुर्भुजः सूर्यसुतः प्रशांतः स
दास्तुमह्यंवरमंदगामी ॥ ७ ॥ नीलांबरोनीलवपुः किरीटीकरालवक्त्रः करवालशूली ॥ चतु
र्भुजश्चर्मधरश्चराहुः सिंहासनस्थोवरदोस्तुमह्यं ॥ ८ ॥ धूम्रोद्विबाहुर्वरदोगदाभृद्गृध्रासनस्थो
विकृताननश्च ॥ किरीटकेयूरविभूषितांबरः सदास्तुमेकेतुगणः प्रशांतः ॥ ९ ॥ इतिसंप्रार्थ्य
दद्यात् ॥ इतिप्रार्थनामंत्रा दानमंत्राश्च ॥ अथवासरदोषापनोदनानि संहिताप्रदीपे ॥ भानु
स्तांबूलदानादपहरतिनृणांवैकृतंवासरोत्थंसोमः श्रीखंडदानादवनिसुतभवंरक्तपुष्पप्रदानात्
॥ सौम्यः शक्रस्यमंत्रीहरिहरनमनाद्भार्गवः शुभ्रवस्त्रात्तैलस्नानात्प्रभातेदिनकरतनयोब्रह्मन
त्यापरेचेति॥१॥इतिवारदोषापनोदनानि॥अथसहस्रभोजनविधिः ॥भविष्यपुराणे । सहस्रभो
जनस्येहविधिंनारायणोमुनिः ॥ सर्वेषांचैवपुण्यानामब्रवीत्पुण्यमुत्तमं ॥ यदाचित्तंचवित्तंचभ
क्तिरात्मनिजायते ॥ तदानीमेवकर्तव्यंप्रीतयेपरमात्मनः ॥ आषाढंचैवपौषंचमलमासंतथैव

च ॥ गुरुभार्गवयोरस्तंहित्वान्यस्मिन्शुभेदिने ॥ कृत्वादौमंगलस्नानंशुद्धःसन्भार्ययासह ॥
कृत्वादौद्रव्यशुद्ध्यर्थंप्रायश्चित्तंयथाविधि ॥ दशांशद्रव्यमादायविप्रेभ्योविनिवेदयेत् ॥द्रव्यंसं
प्रोक्षयेत्पश्चात्संपादितंतदाज्ञया ॥ गणेशंपूजयेत्पूर्वंमातॄणांपूजनंततः ॥ कृत्वाभ्युदयिकंश्रा
द्धंस्वस्तिवाचनपूर्वकं ॥ आचार्यंपूजयेत्पश्चाद्वस्त्रालंकारभूषणैः ॥ ऋत्विजोवरयेदष्टौवस्त्रगंधै
श्चपूजयेत् ॥ पुष्पमंडपिकांकृत्वाचतुरस्रांसुशोभनां ॥ कृत्वेशस्यसुवर्णेनप्रतिमांकर्षसं
मितां ॥ सशक्तिकस्यदेवस्यभवानीशंकरस्यच ॥ तस्याधिदेवताविष्णुर्ब्रह्माप्रत्यधिदेव
ता ॥ कृत्वातुप्रतिमाशुद्धिमग्न्युत्तारणपूर्वकं॥षोडशैरुपचारैश्चतत्तन्मन्त्रैःप्रपूजयेत्॥ऋग्भिश्च
पावमानीभिरभिषिच्ययथाविधि ॥ पुष्पमंडपिकामध्येस्थापनंतंडुलोपरि॥प्रतिमांतत्रसंस्था
प्यकलशेचांबरावृते॥ समंताद्देवदेवस्यक्रमेणैवतुपूर्वतः ॥ तत्तन्मंत्रेणनाम्नावापूजयेदंगदेवताः
॥ कर्णिकायांभवानीशोह्यधिप्रत्यधिसंयुतः॥तद्बहिश्चैवचत्वारस्तद्बहिः षोडशक्रमात्॥एकात्रिं
शद्बहिश्चाष्टचत्वारिंशत्तथाक्रमात् ॥ पंद्मस्यदलवच्छस्ताः कर्णिकाशतसंग्रहाः॥दिग्देवा १०
ऋषयःसप्त ७ सागरा ४ भुवनत्रयं३॥नद्यःसप्त ७ गुणा ३ श्चैव वेदा ४ श्चात्मेत्यनुक्रमात् ॥
अत्रपीठयंत्रस्थापनदेवताक्रमप्रयोगंचाह ॥आदौपद्मकर्णिकायांमध्ये विष्णवधिदेवताब्रह्मप्रत्य

धिदेवतासहितंभवानीशंकरंस्थापयेत् । तद्बहिश्चतुर्दलपद्मेप्रादक्षिण्येन गणेश १ दुर्गा २ क्षेत्रपाला ३ भयंकराः ४ स्थाप्याः तद्बहिस्तृतीयेषोडशदलेषोडशमातरः ॥ गौरी १ पद्मा २ शची ३ मेधा ४ सावित्री ५ विजया ६ जया ॥ ७ देवसेना ८ स्वधा ९ स्वाहा १० मातरो ११ लोकमातरः ॥ १२ धृतिः १३ पुष्टि १४ स्तथा तुष्टि १५ रात्मनःकुलदेवताः॥१६॥तद्बहिरेकत्रिंशद्दलेवसुरुद्रादित्याः अष्टौवसवस्तु । ध्रुवो १ऽध्वरश्च २ सोमश्च ३ आपश्चै ४ वाऽनिलो ५ नलः ६ प्रत्यूषश्च ७ प्रभासश्च ८ वसवोष्टौऽकप्रीर्तिताः॥एकादशरुद्रास्तु॥वीरभद्रश्च १ शंभुश्च २ योगीशो ३जैकपात्तथा ॥४अहिर्बुध्न्यः५ पिनाकीच ६ भुवनाधीश्वरस्तथा ॥ ७ कपाली ८ विट्पतिः ९ स्थाणु १० र्भर्गाख्यो ११ रुद्रसंज्ञकाः इति॥ द्वादशादित्यास्तु । धाता १ र्यमाच २ मित्रश्च ३ वरुणे ४ शौ५ भगस्तथा ६ ॥ इंद्रो ७ विवस्वान् ८ पूषाच ९ पर्जन्यो १० दशमस्तथा ॥ त्वष्टा ११ विष्णु १२ रितिप्रोक्ताआदित्याद्वादशक्रमात् ॥ पंचमेष्टचत्वारिंशद्दलआदौक्रमेणनवग्रहाः । सूर्यः १ सोमो २ महीपुत्रः ३ सोमपुत्रो ४ बृहस्पतिः ५ ॥ शुक्रः ६ शनैश्चरो ७ राहुः ८ केतुश्चैव ९ नवग्रहाः इति ॥ दशलोकपालास्तु । इंद्रो १ ग्नि २ र्यमो ३ निर्ऋति ४ र्वरुणो ५ वायु ६ रेवच ॥ कुबेरे ७ शौ ८ तथाब्रह्मा ९ अनंतो

१० दशदिक्पतिः इति ॥ सप्तर्षयस्तु । कश्यपो १ त्रि २ र्भरद्वाजो ३ विश्वामित्रो ४ ऽथगौत
मः ५ ॥ जमदग्नि ६ र्वसिष्ठश्च ७ सप्तैतेऋषयःक्रमात् ॥ समुद्रास्तु । पूर्व १ दक्षिण २ प
श्चिमो ३ त्तरा ४ श्चत्वारःसमुद्राइति ॥ भुवनत्रयं भूर्लोक १ भुवर्लोक २ स्वर्लोकाः३इति ॥ सप्त
सरितश्च । गंगाच १ यमुना २ चैवगोदावरी ३ सरस्वती ४ ॥ तापी ५ पयोष्णी ६ रेवा
च ७ सप्तनद्योयथाक्रमम् इति ॥ त्रिगुणास्तु सत्वं १ रज २ स्तमो ३ गुणाइति ॥ चत्वारोवे
दास्तु । ऋग्वेदो १ ऽथयजुर्वेदः २ सामवेदो ३ ह्यथर्वणः ४ इति ॥ आत्माचइत्येतास्तत्रावा
ह्यपूजयेदिति ॥ इतिपीठयंत्रदेवतास्थापनक्रमः ॥ गंधपुष्पादिभिश्चैवसमभ्यर्च्ययथाविधि ॥
यथाशक्तिकृतंसर्वमर्चनंविनिवेदयेत् ॥ देवदेवजगन्नाथविश्वसाक्षिन्नमोऽस्तुते ॥ गृहाणेमांकृ
तांपूजांप्रसीदभगवन्गुरो ॥ ग्रहयज्ञविधानेनग्रहपूजांसमाप्यच ॥ ऋत्विग्भिःसहवैहोमंततः कु
र्याद्यथाविधि॥कुंडेवास्थंडिलेवापिस्वगृह्यविधिनाद्विजः ॥ कृत्वाज्यभागपर्यंतमुपलेपादिकंत
तः ॥ ततः । समिदाज्येनचरुणायवैस्तिलसमन्वितैः॥सहस्रंचाहुतीस्तत्रन्याहृतीभिस्ततः क्र
मात् ॥ जुहुयादृत्विगेकैकश्चतुर्विंशोत्तरंशुभं ॥ प्रणवेनाहुतिंचैकांमंत्रेणैवपृथक्पृथक्॥देवता
नांचसर्वेषांनामभिर्जुहुयादृघृतं ॥ देवतानांअंगदेवतानां ॥ततः स्विष्टकृतंहुत्वाहोमशेषंसमाप

येत् ॥ आचार्यादीन्समभ्यर्च्यगंधपुष्पाक्षतादिभिः ॥ दद्याद्विभवसारेणदक्षिणांचयथो चितं ॥ लेह्यंपेयंतथाचोष्यंखाद्यंचैवचषड्रसान् ॥ देवायादौनिवेद्यंतुद्विजवर्यान्समर्चयेत् ॥ भक्ष्यभोज्यादिकंदद्यात्तृप्तिर्यस्ययथाभवेत् ॥ दक्षिणांचयथाशक्त्यासर्वेषांचसमांशतः ॥ ततश्च भोजयेद्विप्रान्सहस्रंसम्यगेवहि ॥ एकस्मिन्नेवकालेवाभवेद्वापिदिनेदिने ॥ भवेद्यावत्सहस्रंतुतावदेवहिभोजयेत् ॥ तेभ्योऽपिदक्षिणांदद्याद्भुजानेभ्यः स्वशक्तितः ॥ दीनांधकृपणादींश्चभोजयित्वास्वयंततः ॥ समाहितमनाः कर्त्ताभुंजीयात्सहबंधुभिः ॥ एवं यः कुरुतेसम्यक्सहस्रद्विजभोजनं ॥ समाप्तेतुपुनर्होमः कर्तव्योमुनिरब्रवीत् ॥ ब्रह्महाचसुरापीचपरद्रव्यापहारकः ॥ मातृगामीचगोघ्नश्चपरदाररतः सदा ॥ ज्ञानतोऽज्ञानतोवापिपापकारीयथेच्छया ॥ सदाचारविहीनस्तुदमदानविवर्जितः ॥ ईदृशोपिद्विजोयः स्यात्सहस्रद्विजभोजनं॥कुरुतेसद्यएवेहसपुनातिनसंशयः ॥ ब्रह्मानंदपदंगच्छेत्तेनपुण्येनचैवहि ॥ सहस्रभोजनाच्चैवनानाविधमनोरथान् ॥ भुंक्तेसकामान्सकलान्भोगानपिचपुष्कलान् इति ॥ तत्रसंकल्पमाह । ममपंचमहापातकानिवृत्तिगोवधपरदारपरद्रव्यापहारकायिकवाचिकमानसिकैतच्छरीरावच्छिन्नसमस्तपापक्षयपूर्वकनानाविधमनोरथसिद्ध्यंतेषष्टिसहस्रवर्षविष्णुलोकनिवासांतेब्रह्मानंदावाप्तिद्वाराश्रीपरमेश्वर

प्रीत्यर्थं सहस्रब्राह्मणान् यथाशक्त्यायथोपपन्नेनान्नेनयथाकालंयथादेशंसदक्षिणंभोजयिष्ये इतिसंकल्प्य तदादौगणेशपूजनंस्वस्तिवाचनंमातृकापूजनंनांदीश्राद्धंआचार्यऋत्विग्वरणहो मादिचकरिष्ये इतिसंकल्प्य । गणेशपूजनादियथोक्तक्रमेणकुर्यादिति ॥ अथसर्वस्वदानसं कल्पवाक्यं । मात्स्ये । अद्येत्यादि० ममैतच्छरीरावच्छिन्नसमस्तपापक्षयपूर्वकसकलम नोरथसिद्धियज्ञयाजित्वसर्वद्रव्यदानजन्यसर्वतीर्थस्नानजन्यसर्वदेवपूजाजन्यसमफलयमलो कादर्शनदारिद्र्यानुत्पत्तिसर्वकालस्त्रीपुत्रपौत्रधनधान्यसौख्याद्यावज्जीवमवियोगैहिकामुष्मिकै श्वर्यत्ववहुगंधर्वोपगीयमानदिव्याप्सरोगणसेवितदिव्यांगनासमाकीर्णहंससारसविहगादिपरि वृतहेमकिंकिणीजालमालिकामंडिततरुणादित्यसंकाशविमानारोहणशक्रादिसुरगणब्रह्मवि ष्णुरुद्रलोकेंद्रलोकादिस्वेच्छयाविचरणयावदाभूतसंप्लवाक्षय्यस्वर्गलोकावाप्त्यंतेविष्णुसायु ज्यप्राप्तयेइदं सकलं ममाश्रमीयंसकलवस्तुसर्वस्वं सर्वविष्णुदैवतं तत्रैवकल्पितसुवर्ण बहुदक्षिणं ॐसर्वस्वायनमइतिनाममंत्रेणसुपूजितायतुभ्यमहंसंप्रददेनममेत्येकस्मैदद्यात् । यद्वा । नानानामगोत्रेभ्योब्राह्मणेभ्यः सुपूजितेभ्यः सदक्षिणंदातुमहमुत्सृजेनममेति तेनश्री परमेश्वरः प्री०तत्सद्ब्रह्मार्पणमस्तु। प्रार्थनामंत्रस्तु ॥ हरिश्चंद्रोयथाराजासर्वंदत्त्वादिवंगतः ॥

तथाहमाश्रमंदत्वायास्यामित्रिदशालयं ॥ दिविभुव्यंतरिक्षेचहस्त्यश्वरथसंकुला ॥ हरिश्चंद्रस्यनृपतेः शोभतेनगरीयथा ॥ तथाममाश्रमंसर्वंदिविसर्वत्रगच्छतु ॥ सर्वस्वदानेनानेनतांगतिंप्राप्नुयामहं ॥ सर्वस्वतवदानेनहरिश्चंद्रोयथाभवत् ॥ दुःखहीनःसुखमयस्तथामांकुरुसर्वदा ॥ सर्वस्वदानात्सकलाममसंतुमनोरथाः ॥ इतिसर्वस्वदानप्रयोगः ॥ अथयुगप्राधान्येनव्यासोक्ताधर्माउच्यंते ॥ तपःपरंकृतयुगेत्रेतायांज्ञानमुत्तमं ॥ द्वापरेयज्ञमित्याहुर्दानमेवकलौस्मृतम् ॥ इति ॥ स्कांदे । श्रांतस्ययानंतृषितस्यपानमन्नंक्षुधार्तस्यनरोनरेंद्र ॥ दद्याद्विमानेनसुरांगनाभिःसंस्तूयमानस्त्रिदिवंप्रयाति॥ यतीनामाहयमः॥यतीनांपरमोधर्मस्त्वनाहारोवनौकसां ॥ दानमेवगृहस्थानांशुश्रूषाब्रह्मचारिणाम् इति ॥ दानमावश्यकंकेषामित्याहव्यासः ॥ मातापित्रोश्चयद्दत्तंभ्रातृस्वसृसुतायच ॥ सोदर्येपिचयद्दत्तंसोऽतिथिःस्वर्गसंक्रमः॥ पितुः शतगुणंदानंसहस्रंमातुरुच्यते ॥ अनंतंदुहितुर्दानंसोदर्येदत्तमक्षयम् ॥ भविष्योत्तरेपि॥ नकेवलंब्राह्मणानांदानंसर्वत्रशस्यते ॥ भगिनीभागिनेयानांमातुलानांपितृस्वसुः ॥ दरिद्राणांचबंधूनांदानंकोटिगुणंभवेत् ॥ मातुर्गोत्रेशतगुणंस्वगोत्रेदत्तमक्षयम् ॥ दातुर्लक्षणमपितत्रैव॥ अपापमा रोगी धर्मात्मा दित्सुरव्यसनःशुचिः ॥ अनिंद्योजीवकर्माचषड्भिर्दाताप्रशस्य

ते ॥ प्रतिग्रहीतृलक्षणमपि तत्रैव ॥ निःशुक्तःक्षीणवृत्तिश्चघृणालुः सकलेंद्रियः ॥ विमु
क्तोयोनिदोषेभ्योब्राह्मणः पात्रमुच्यते ॥ तथा ॥ सौमुख्यमभिसंप्रीतिरर्थिनांदर्शनेस
दा ॥ सत्कृतिश्चानसूयाचतदाश्रद्धेतिकीर्त्यते ॥ देवलः ॥ यद्ददातियदश्नातितदेवधानिनांध
नम् ॥ अन्येमृतस्यक्रीडंतिदारैरपिधनैरपि ॥ व्यासः ॥ आयासशतलब्धस्यप्राणेभ्योपिगरी
यसः ॥ गतिरेकैववित्तस्यदानमन्येविपत्तयः ॥ ग्रासादर्धमपिग्रासमर्थिभ्यः किंनदीयते ॥
इच्छानुरूपोविभवः कदाकस्यभविष्यति ॥ मात्स्ये । न्यायेनार्जनमर्थस्यवर्धनंचाभिरक्षण
म् ॥ सत्पात्रेप्रतिपत्तिश्चसर्वशास्त्रेषुगीयते ॥ पुनस्तत्रैव । अदातायत्रयत्रैतितत्रतत्रसुदुःखि
तः ॥ दानात्सुखमवाप्नोतिपरत्रापिचनिर्वृतः इति ॥याज्ञवल्क्यः ॥ अक्षरद्वयमभ्यस्तंनास्ति
नास्तीतियत्पुरा ॥ तदिदंदेहिदेहीतिविपरीतमुपस्थितम् इति ॥ तथा । द्वारंद्वारमटंतीहभि
क्षुकाःपात्रपाणयः॥दर्शयंत्येवलोकाना मदातुःफलमीदृशं॥बृहस्पतिः।द्वावेवाप्सुप्रवेष्टव्यौगले
बद्ध्वादृढांशिलां ॥ धनवंतमदातारंदरिद्रंचातपस्विनम् इति ॥ दरिद्रस्यैवदद्यादित्याह । बृह
स्पतिः । वृष्टिर्यथासमुद्राणांतृप्तानामशनंयथा ॥ तथादानंसमृद्धानांदत्तंभवतिनिष्फलम् इ
ति ॥ अतःपरंषोडशमहादानादीनांबहुत्वादुपरम्यतइति ॥ कालोपनामरामेशभट्टसूनोःसुधी

मतः ॥ महादेवद्विजार्यस्यसूनुनाप्रभविष्णुना ॥ १ ॥ दिवाकरेणरचितादानसंक्षेपचंद्रिका ॥
गिरिजाजानितुष्ट्यर्थंमुदंवितनुयात्सताम् ॥२॥ इति विद्वत्प्रार्थना॥अदृष्टदोषान्मतिविभ्रमाद्वा
यदर्थहीनंलिखितंमयात्र ॥ तत्सर्वमार्यैःपरिशोधनीयंकोपंनकुर्यात्खलुतर्णकस्य ॥ ३॥ किंच ।
शास्त्रकर्त्ताभवेद्व्यासोलेखकोगणनायकः ॥ तयोर्वैचलिताबुद्धिर्मनुष्याणांतुकाकथा ॥ ४ ॥ ले
खनपरिश्रमवेत्ताभुवनेविद्वज्जनोनान्यः ॥ सागरलंघनखेदंहनुमानेकःपरंवेत्ति ॥ इतिकाश्यां
श्रीमत्कालोपनामकभट्टरामेश्वरात्मजभट्टमहादेवद्विजवर्यसूनुनाबालंभट्टानुजदिवाकरेणवि
रचितादानचंद्रिकासमाप्ता ॥ दानानिसर्वाण्यभिधायतेपांप्रतिग्रहेशुद्धिमतोऽभिधास्ये ।
तथाधियाभावितयाप्रवृत्तिः प्रतिग्रहेसाधुजनस्यनस्यात् ॥ तत्रमेर्षादानप्रकरणे ।
दुष्प्रतिग्रहहृतोविप्रोभवतिपातकी ॥ नाभिभाषेत्ततोदत्वातन्मुखंनावलोकयेत् इ
त्यादि ॥ भविष्योत्तरे । दुष्प्रतिग्रहदग्धस्यविप्रस्याकिलभारत ॥ नपश्येद्वदनंपश्चान्नचैनम
भिभाषयेत् इति ॥ महाभारतेच । पूजकोगणकोव्यासोचोरग्राहीतथैवच ॥ परास्थिवाहको
वैद्योग्रामयाजीतथैवच ॥ एतेचांत्यसमालोकेनस्प्रष्टव्याः कदाचन ॥ कदाचिन्मोहतः स्पृष्टः
सवासाआप्लुतः शुचिः इति ॥ पराशरस्मृतौच । मंत्रेणानेनदत्वातंप्रणिपत्यक्षमाप्यच ॥

आसीमांतमनुव्रज्यतन्मुखंनावलोकयेत् इति ॥ महार्णवेचदुष्टप्रतिग्रहः स्पष्टः प्रतिग्रहदुष्टत्वं
चतुर्धा । दातृकालदेशप्रतिग्राह्यदोषभेदात् ॥ चांडालत्वपतितत्वादयोदातृदोषाः । कुरुक्षे
त्रत्वादयोदेशदोषाः चंद्रसूर्योपरागादयः कालदोषाः।उभयतोमुखीत्वमेषीत्वादयोदेयदोषाः॥
तिलधेनुर्गजोवाजीमाहिषाजिनमूर्तयः॥सुरभिःसूयमानाचघोराःसप्तप्रतिग्रहाः इतिनिषेधात्॥
प्रेतान्नमजिनंमणिरितिपाठेप्रेतान्नमेकादशाहिकश्राद्धान्नभोजनम् । मणिः शालग्रामइति
हेमाद्रिः । तत्रैवतन्निषेधोऽरुणस्मृतौ । परमापद्गतेनापिअंत्यजातिप्रतिग्रहः ॥ नका
र्योब्राह्मणेनेहआत्मनः श्रेयइच्छता ॥ प्रतिग्रहाच्चांत्यजातेः पतितत्वंप्रजायते इति ॥ अंत्य
जानाह मनुः ॥ रजकश्चर्मकश्चैवनटोबुरुडएवच॥कैवर्तमेदभिल्लाश्चसप्तैतेअंत्यजाः स्मृताः ॥
चांडालानाह व्यासः । ब्राह्मण्यांशूद्रजातश्चचांडालस्त्रिविधः स्मृत इति ॥ तथा । कुरुक्षेत्रेप्र
तिग्रहीनभूयः पुरुषोभवेत् ॥ गायत्रीमनुजाप्येनसप्तलक्षंभवेच्छुचिः इति ॥ कालदोषाभिन्नोऽ
सत्प्रतिग्रहनिषेधः । तत्प्रतिग्रहप्रायश्चित्तकथनेनस्पष्टः ॥ सर्वसत्प्रतिग्रहेप्रायश्चित्तंषट्त्रिंश
न्मते । देव्यालक्षजपेनैवशूद्ध्यतेसत्प्रतिग्रहात् इति ॥ जपसंख्यातु । जपित्वात्रीणिसाविज्या
सहस्राणिसमाहित इति ॥ मनूक्तंतुद्वित्रिप्रकारेणप्रतिग्रहस्यासत्त्वविषयं । तेनपतितादिभ्यो

मतः ॥ महादेवद्विजार्यस्यसूनुनाप्रभविष्णुना ॥ १ ॥ दिवाकरेणरचितादानसंक्षेपचंद्रिका ॥
गिरिजाजानितुष्ट्यर्थमुदंवितनुयात्सताम् ॥२॥ इति विद्वत्प्रार्थना॥अदृष्टदोषान्मतिविभ्रमाद्वा
यदर्थहीनंलिखितंमयात्र ॥ तत्सर्वमार्यैःपरिशोधनीयंकोपंनकुर्यात्खलुतर्णकस्य ॥ ३॥ किंच ।
शास्त्रकर्ताभवेद्व्यासोलेखकोगणनायकः ॥ तयोर्वैचलिताबुद्धिर्मनुष्याणांतुकाकथा ॥ ४ ॥ ले
खनपरिश्रमवेत्ताभुवनेविद्वज्जनोनान्यः ॥ सागरलंघनखेदंहनुमानेकःपरंवेत्ति ॥ इतिकाश्यां
श्रीमत्कालोपनामकभट्टरामेश्वरात्मजभट्टमहादेवद्विजवर्यसूनुनाबालंभट्टानुजदिवाकरेणवि
रचितादानचंद्रिकासमाप्ता ॥ दानानिसर्वाण्यभिधायतेषांप्रतिग्रहेशुद्धिमतोऽभिधास्ये ।
तथाधियाभावितयाप्रवृत्तिः प्रतिग्रहेसाधुजनस्यनस्यात् ॥ तत्रमेषीदानप्रकरणे ।
दुष्प्रतिग्रहहतोविप्रोभवतिपातकी ॥ नाभिभाषेत्ततोदत्वातन्मुखंनावलोकयेत् इ
त्यादि ॥ भविष्योत्तरे । दुष्प्रतिग्रहदग्धस्यविप्रस्याकिलभारत ॥ नपश्येद्वदनंपश्चान्नचैनम
भिभाषयेत् इति ॥ महाभारतेच । पूजकोगणकोव्यासोघोरग्राहीतथैवच ॥ परास्थिवाहको
वैद्योग्रामयाजीतथैवच ॥ एतेचांत्यसमालोकेनस्प्रष्टव्याः कदाचन ॥ कदाचिन्मोहतः स्पृष्टः
सवासाआप्लुतः शुचिः इति ॥ पराशरस्मृतौच । मंत्रेणानेनदत्वातंप्रणिपत्यक्षमाप्यच ॥

श्चित्तंतथोच्यते ॥ प्रतिग्रहेचरेद्विप्रः प्राजापत्यमतंद्रितः ॥ जपेच्चपौरुषंसूक्तमप्सुचैवाघमर्ष
णं ॥ अहोरात्रस्थितश्चैवमुच्यतेतेनकिल्बिषात् ॥ अयुतंजपसंख्या । गृहदानंमहादानंनास्ति
दानंगृहात्परं ॥ येनदत्तेनवैतेनसर्वंदत्तंभवेन्नृणां ॥ गृहोपकरणंसर्वंगोमहिष्यादिभूषणं ॥ कं
डणीपेषणीचुल्लीह्युदकुंभस्तुमार्जनी ॥ शय्याविभाजितंछत्रंवितानंरथगोवृषं ॥ तत्रकृच्छ्रंचरे
द्विप्रोमहासांतपनंतथा ॥ शतंवाभोजयेद्विप्रान्गायत्रीलक्षमेवच ॥ प्रायश्चित्तेकृतेविप्रोमुच्य
तेतत्प्रतिग्रहात् ॥ प्रायश्चित्तस्याकरणेध्रुवंवाम्रियतेतुसः ॥ अश्वप्रतिग्रहंकृत्वाचरेच्चांद्रायण
त्रयं ॥ अश्वस्यविक्रयंकृत्वाह्येतदेवव्रतंचरेत् ॥ कपिलाविक्रयंकृत्वाचरेच्चांद्रायणत्रयं ॥ गो
शतंगोसहस्रंचकृष्णावैतरणीतथा ॥ चतस्रश्चैवगावश्चवर्जनीयाः प्रयत्नतः ॥ चतस्रउत्क्रां
तिऋणपापमोक्षधेनवः ॥ गृहीत्वावैतरणींलोहंयमदंडभयावहं ॥ प्राजापत्यत्रयंकुर्याद्भोज
येच्चशतंद्विजान् ॥ जपेद्वावामदेव्यंचशिवसंकल्पमेवच ॥ रथंतरंवामदेव्यंजपेन्मुच्येतकि
ल्बिपात् ॥ यज्ञकर्माणियाधेनुर्व्रतधेनुस्तथैवच ॥ मधुपर्केचयाधेनुर्याधेनुःकर्मसिद्धये॥एतत्प्र
तिग्रहेविप्रप्रायश्चित्तंनविद्यते॥पर्वतायेदशप्रोक्तास्तथैवद्विमुखीचगौः॥उग्रप्रतिग्रहेविप्रःक्षपेन्मा
सचतुष्टयं॥प्राजापत्येनकृच्छ्रेणपष्ठांशंतुपरित्यजेत् ॥ विप्रेभ्योदद्यात्॥जपेद्वादशलक्षंवागाय

दुष्टदेशकालयोरदुष्टप्रतिग्रहेषट्त्रिंशन्मतोक्तंदशप्राजापत्यरूपं।पतितादिभ्योमहिष्यादिप्रतिग्रहेयाज्ञवल्क्योक्तमितिविज्ञानेश्वरः ॥ स्मृत्यर्थसारे । सर्वत्रानुक्तोदानदेयकालद्रव्येष्वदुष्टेपि द्वादशनिष्कप्रमाणंद्रव्यप्रतिग्रहेकार्यं । एवंसर्वत्रद्रव्यानुसारेणप्रायश्चित्तवृद्धिह्रासौकल्प्यौ । दातृदेशकालद्रव्येष्वन्यतरदोषेएकैकगुणवृद्धिः । मणिवासोगवादीनामन्यतरप्रतिग्रहेगायत्र्यष्टसहस्रजपः । भिक्षादिप्रतिग्रहेपुण्यमंत्रोच्चारणं । नचप्रतिग्रहस्यानिषिद्धत्वात्कथंप्रायश्चित्तविधिरितिवाच्यं ॥ प्रतिग्रहेणविप्राणांब्राह्मंतेजः प्रणश्यति इत्यरुणस्मृत्याप्रायश्चित्ताम्नायेनचतत्कथनात् । प्रतिग्रहसमर्थोपिप्रसंगंतत्रवर्जयेत् इतिस्पष्टमेवनिषेधसत्त्वाच्च ॥ प्रायश्चित्तंचप्रतिगृहीतसर्वद्रव्यंत्यक्त्वैवकार्यम् । सतिद्रव्येप्रायश्चित्ताधिकाराभावात् इतिस्मृत्यर्थसारादयः ॥ अरुणस्मृतौतु । षष्ठांशद्वादशांशपरित्यागौवैकल्पिकावुक्तौ । तथा प्रतिग्रहाच्चषष्ठांशंवाणिज्याच्चतृतीयकं ॥ कृष्टेर्विंशतिमंभागंत्यजतांनास्तिपातकं ॥ प्रतिग्रहः कुत्सितानांत्रिभिः कृच्छ्रैर्विशुध्यति ॥ रथोवाजीचमहिषीतिलधेनुर्गजोऽजिनं ॥ सूयमानाच्चसुरभिर्घोराः सप्तप्रतिग्रहाइति ॥ एतेषांप्रतिग्रहेआहिताग्नेः प्राजापत्येष्टिः स्मार्ताग्निमतश्चरुस्तद्देवताकः अनग्नेः अन्येषांचकृच्छ्रत्रयं ॥ अरुणस्मृतौ । गुडधेन्वादिधेनूनांप्राय

संधिः । आयुष्यमितिसूक्तेनमणिंकंठेप्रतिमुच्येत्यादिसूत्रेषुअखिलानामपिविनियोगदर्शना
त् । तेषामपिप्रामाण्यबलात् । पावमानीजपस्याखिलेषुविधानात्तत्तत्फलापेक्षायांगो
घ्रान्मातृपितृवधादित्यादिमंत्रवर्णैनतत्तत्पातकनाशस्यफलत्वावगत्यातत्तत्पापेषुपावमानीज
पस्यप्रायश्चित्तत्वंपापानुरोधेनचजपसंख्याकल्पनीयेतिदिक् ॥ अथराजप्रतिग्रहप्राय
श्चित्तं ॥ अनापदिराजप्रतिग्रहंनिंदतियाज्ञवल्क्यः ॥ न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छा
स्त्रवर्तिनः ॥ प्रतिग्रहेसूनीचक्रीध्वजिवेश्यानराधिपाः॥दुष्टादशगुणंपूर्वंपूर्वादेतेयथोत्तरम् इति॥
संवर्तः राजप्रतिग्रहोघोरोमध्वास्वादोविषोपमः॥पुत्रमांसंवरंभोक्तुंनतुराजप्रतिग्रहः इति॥स्कां
दे । मरुदेशेनिरुदकेब्रह्मरक्षस्त्वमागतः ॥ राजप्रतिग्रहात्पुष्टःपुनर्जन्मनविंदति ॥ब्राह्मण्यंयः
परित्यज्यद्रव्यलोभेनमोहितः ॥ विषयामिषलुब्धस्तुकुर्याद्राजप्रतिग्रहं॥ नरकेरौरवेघोरेतस्यै
वपतनंध्रुवं ॥ वृक्षादावाग्निना दग्धाः प्ररोहंतिघनागमे ॥ राजप्रतिग्रहाद्दग्धानप्ररोहंतिकेनचि
त् इति ॥ विष्णुधर्मोत्तरे । दशसूनासमश्चक्रीदशचक्रीसमोध्वजी ॥ दशध्वजीसमावेश्यादश
वेश्यासमोनृपः ॥ दशसूनासहस्राणियोवाहयतिसौनिकः ॥ तेनतुल्यः स्मृतोराजातस्माद्घोरः
प्रतिग्रह इति ॥ इत्यधार्मिकराजविषयेनिंदा ॥तथाचतत्रैवलिखितं । येषांनविषयेप्रीतिर्ये

न्यानिशयभोजनः ॥शतेनमुच्यतेपापाद्विप्राणांभोजनेनच ॥ प्राणायामशतंकुर्याद्ब्रह्मकूर्चसमन्वितं ॥ रथप्रतिग्रहेलक्षगायत्रीजपमाचरेत् ॥ अयुतंवाथगायत्र्याःसंगमेस्नानमाचरेत् ॥षष्ठांशंतुपरित्यज्यब्राह्मणान्भोजयेच्छुचिः ॥प्रतिगृह्यान्नदानानिप्रायश्चित्तंयथोदितं ॥ जपेन्निरंतरंदेवीद्वैप्णवंव्रतमाचरेत् ॥ जपसंख्याअयुतादि॥विद्यादानंगृहीत्वापियत्किंचित्पुस्तकादिकं॥ब्राह्मणान्भोजयेद्भक्त्याकृच्छ्रमेकंसमाचरेत् ॥ पृथिवींप्रतिगृह्याथसशैलवनकाननां ॥ अपिधातुमथोगृह्यततकृच्छ्रत्रयंतथा ॥ भूत्वात्रिपवणस्नायीक्षिपेन्मासचतुष्टयं ॥ एवंशुद्धिमवाप्नोतिद्विजःषष्ठांशमुत्सृजेत् ॥ इदंचसदक्षिणप्रतिग्रहे । तद्रहितप्रतिग्रहेतुनदोषः । भूमिंयःप्रतिगृह्णातियस्तुभूमिंप्रयच्छति ॥ तावुभौपुण्यकर्माणौनियतंस्वर्गगामिनौइत्युक्तेः ॥ अथषोडशमहादानेषु तत्रचारुणस्मृतौ तुलापुरुषभागंचगृहीत्वाचांद्रकंचरेत् हिरण्यगर्भंचतथाब्रह्मांडेकल्पपादपे ॥जलेत्रिपवणस्नायीचरेत्सांतपनद्वयं॥गोसहस्रप्रतिग्राहीयदाविप्रोह्यकामतः॥गोमूत्रयावकाहारोमासेनैकेनशुध्यति ॥ हिरण्यकामधेन्वादिदानमत्रयथोदितं ॥ महाभूतघटांतेषुप्रायश्चित्तमथोच्यते ॥ गायत्र्यादशलक्षैश्चप्राणायामसहस्रकैः ॥ नश्यंतिपापसंघाश्चकाकथादुष्प्रतिग्रहे ॥ पावमानंचसूक्तंवैसर्वपातकनाशनं ॥ अत्रायमभि

पस्तुरहस्यव्रतमाचरेत् इति ॥ कर्तृव्यतिरिक्तैर्यदीयोदोषोनज्ञायतइत्यर्थः ॥ अतश्चपारदार्यो
देरपिस्त्रीपुंसाभ्यामितरेणाज्ञातस्यरहस्यतास्त्येव । तस्यप्रायश्चित्तमपिरहस्यमेवकर्तव्यं ॥
तथाचहारीतः । रहस्येरहस्यंप्रकाशेप्रकाशमिति । तत्ररहस्यानांसाधारणप्रायश्चित्तंमनुरा
ह । वेदाभ्यासोऽन्वहंशक्त्यामहायज्ञक्रियाक्षमा ॥ नाशयंत्याशुपापानिमहापातकजान्यपि ॥
यथैधस्तेजसावह्निः प्राप्तंनिर्दहतिक्षणात् ॥ तथाज्ञानकृतंपापंकृत्स्नंदहतिवेदवित् ॥ सव्याहृ
तिकप्रणवाःप्राणायामास्तुषोडश ॥ अपिभ्रूणहनंमासंपुनंत्यहरहः कृताः इति ॥ वसिष्ठः ।
यच्चाकार्यंकृतंसाग्रशतंवेदैश्चधार्यते ॥ तत्सर्वंतस्यवेदाग्निर्दहत्यग्निरिवेंधनं ॥ यमः । सहस्र
परमांदेवींशतमध्यांदशावरां ॥ गायत्रींसंजपेन्नित्यंमहापातकनाशिनीम् इति ॥ मू
लेशौनकः । ऋग्वेदमभ्यसेद्यस्तुयजुः सामाथवापिवा ॥ सूक्तानिसरहस्यानिअथर्वांगिरसस्त
था ॥ ब्राह्मणानिचकल्पांश्चषडंगानितथैवच ॥ इतिहासपुराणानिदेवतास्तवनानिच ॥ जप्त्वा
पापैः प्रमुच्येतधर्मस्थानैस्तथापरैः ॥ इति ॥ कौर्मे । जपस्तपस्तीर्थसेवादेवब्राह्मणपूजनं ॥
ग्रहणादिषुकालेषुमहापातकशोधनं ॥ पुण्यक्षेत्राभिगमनंसर्वपापप्रणाशनं ॥ अमावा

ज्ञेयज्ञपतेर्हरेः॥यत्रयेभूभुजां तेषामेतत्सूनोदितंफलं॥ येषांपाखंडिसंकीर्णंराष्ट्रंनब्राह्मणोत्कटं ॥ एतेसूनासहस्राणांदशानांभोगिनोनृपाः॥येषांनयज्ञपुरुषः कारणंपुरुषोत्तमः ॥ तेतुपापसमाचाराः सूनापापौघभागिनः इति ॥ अदुष्टात्तुराज्ञःप्रतिग्रहोननिंदितः अतएवोक्तंछंदोगशाखायां । प्राचीनशालादीन्महामुनीन्राजप्रतिग्रहे प्रवर्तते इति ॥ अश्वपतिनामकेनराज्ञादोषाभावउपन्यस्तः नमेस्तेनोजनपदेनकुर्याञ्चचमद्यपः॥नानाहिताग्निर्नाविद्वान्नस्वैरीस्वैरिणीकुतः इति ॥ याज्ञवल्क्यवचनेपिराजप्रतिग्रहनिंदायांलुब्धस्योच्छास्त्रवर्तिनइतिराजविशेषणाददुष्टराजप्रतिग्रहोननिंदितइतिगम्यते ॥ तथा नारदोपि । श्रेयान्प्रतिग्रहोराज्ञांनान्येषांब्राह्मणादृते ॥ ब्राह्मणश्चैवराजाचद्वावप्येतौधृतव्रतौ ॥ नैतयोरंतरंकिंचित्प्रजाधर्माभिरक्षणे॥शुचीनामशुचीनांचसन्निवेशोयथांभसां ॥ समुद्रेसमतांयातितद्वद्राज्ञांधनागमः ॥ यथाग्नौसंस्थितंचैवशुद्धिमायातिकांचनं ॥ एवंधनागमःसर्वः शुद्धिमायातिराजनि इति ॥ राजप्रतिग्रहेप्रायश्चित्तमाह ॥ वृद्धहारीतः ॥ राज्ञःप्रतिग्रहंकृत्वामासमप्सुसदावसेत् ॥ षष्ठेकालेपयोभक्षः पूर्णेमासेप्रमुच्यते ॥ तर्पयित्वाद्विजान्कामैः सततंनियतव्रत इति ॥ तदसत्प्रतिग्रहविषयमितिमाधवः ॥ अथरहस्यप्रायश्चित्तानि ॥ याज्ञवल्क्यः । अनभिख्यातदो

तीयमभ्यस्यनतमंहइतीतिच॥जप्त्वाचपौरुषंसूक्तंमुच्यतेगुरुतल्पग इति ॥ हविष्पांतमजरंस्व
र्विदीत्येकोनविंशर्चं । नतमंहोनदुरितंसप्तर्चं । इतिवाइतिमेमनस्त्रयोदशर्चं । सहस्रशीर्षेति
षोडशर्चं । एतेषांचतुर्णांसूक्तानांअन्यतमंप्रत्यहंषोडशकृत्वोमासंजपित्वाअकामतोगुरुतल्प
गः शुध्यतीतिविज्ञानेश्वरादिसंमतोऽर्थः ॥ मूलेशौनकः । अतोदेवाजपेत्सूक्तमग्नआयूंषिपावृ
चा ॥ अघमर्षंचवाजप्त्वामुच्यतेब्रह्महत्यया इति ॥ . ॥ इतिश्रीमत्कालोपनामक
भट्टरामेश्वरात्मजभट्टमहादेवद्विजवर्यसूनुभट्टदिवाकरविरचितदानसंक्षेपचंद्रिकायांसदसत्प्र
तिग्रहप्रायश्चित्तानिकाश्यांनिरूपितानि ॥ अथस्मृत्यर्थसारोक्तरहस्यप्रायश्चित्तानि ॥ ॥
कर्तृव्यतिरिक्तेतरज्ञातदोषेरहस्यंप्रायश्चित्तंचरेत् ॥ अविद्वांस्तुमुखांतरेणरहस्यप्रायश्चित्तं
ज्ञात्वारहस्यंचरेत् ॥ स्त्रीशूद्राश्चैवंजपहोमवर्ज्यं । तत्राऽऽहारविशेषानुक्तौपयःप्रभृतयः । का
लविशेषानुक्तौवत्सरादयोमासांताः । देशविशेषानुक्तौशिलोच्चयादयोगौतमोक्ताः । जपेतुऋ
षिदेवतच्छंदोविनियोगाविज्ञेयाः । अमत्याब्राह्मणवधेंतस्त्रिरात्रमंतर्जलेनिमज्यऋतंचसत्यंचे
त्यघमर्षणसूक्तमावर्त्यत्रिरात्रांतेपयस्विनींगांदत्वाशुध्येत् ॥ दानाशक्तौ सव्याहृतिकाः षो

स्यातिथिंप्राप्य यः समाराधयेद्भवं॥ ब्राह्मणान्भोजयित्वातुसर्वपापैः प्रमुच्यते ॥ कृष्णाष्टम्यां महादेवंतथाकृष्णचतुर्दशीं ॥ संपूज्यब्राह्मणमुखेसर्वपापैः प्रमुच्यते ॥ त्रयोदश्यां तथारात्रौसोपहारंत्रिलोचनं ॥ दृष्ट्वेशंप्रथमेयामेमुच्यतेसर्वपातकैः ॥ एकादश्यांनिराहारः समभ्यर्च्यजनार्दनं ॥ द्वादश्यांशुक्लपक्षस्यसर्वपापैःप्रमुच्यते ॥ उपोषितश्चतुर्दश्यां कृष्णपक्षेसमाहितः ॥ यमायधर्मराजायमृत्यवेचांतकायच ॥ वैवस्वतायकालायसर्व भूतक्षयायच ॥ औदुंबरायदध्नायनीलायपरमेष्ठिने ॥ वृकोदरायचित्रायचित्रगुप्तायवैक्रमात् ॥ चतुर्दशैतेमंत्राःस्युश्चतुर्थ्यंतानमोऽन्विताः ॥ प्रत्येकंतिलसंमिश्रान्दद्यात्सप्तोदकां जलीन् ॥ स्नात्वानद्यांतुपूर्वाह्णेमुच्यतेसर्वपातकैः इति ॥ तथातत्रैवाध्यायांतरे ॥ अस्मि न्कलियुगेघोरेलोकाः पापानुवर्तिनः ॥ भविष्यंतिमहाबाहोवर्णाश्रमविवर्जिताः ॥ नान्य त्पश्यामिजंतूनांमुक्त्वावाराणसींपुरीं ॥ सर्वपापप्रशमनंप्रायश्चित्तंकलौयुगे इति ॥ इतिरहस्ये पुसाधारणप्रायश्चित्तानि ॥ अथप्रतिपदोक्तप्रायश्चित्तानि ॥ याज्ञवल्क्यः । त्रिरात्रोपोषितो जप्त्वाब्रह्महात्वघमर्षणं ॥ अंतर्जलेविशुध्येच्चगांचदद्यात्पयस्विनीम् इति ॥ मनुः । हविष्पां

डशप्राणायामाः प्रतिदिनंमासमावर्त्य अभ्यासेतुत्रिंशद्रात्रंव्रतस्थः प्राणायामेश्वांतेऽघम र्षणंजपेत् महापापैः शुध्येत् । मत्याचेत्प्राग्वानिष्क्रम्यस्नायादिति ॥ ॥ इतिस्मृ त्यर्थसारोक्तरहस्यप्रायश्चित्तानिनिरूपितानि ॥ ॥ इतिसंक्षेपदानचंद्रिकासमाप्ता ॥ छ ॥

---

इदं पुस्तकं श्रीकृष्णदासात्मजेन खेमराजगुप्तेन "श्रीवेङ्कटेश्वराख्ये" मुद्रणालये अंकित्वा प्राकाश्यमानीतम् । आवृत्तिः २ द्वितीया । संवत् १९५१ शके १८१६

पुस्तकमिलनेका ठिकाणा.

खेमराज श्रीकृष्णदास "श्रीवेङ्कटेश्वर" छापखाना.

(मुंबई.)